# वेदान्तसारः ।

श्रीमत्परमहंसपरिव्राजकाचार्य्य-श्रीसदानन्द-
योगीन्द्र-विरचितः ।

श्रीनृसिंहसरस्वती-विरचितया सुबोधिन्या
श्रीरामतीर्थयतिकृत-विद्वन्मनोरञ्जन्या च
नाम टीकया समलङ्कृतः ।

श्रीमच्छङ्करभगवत्कृतभाष्यसहित-
हस्तामलकान्वितश्च ।

पण्डितकुलपति-
श्रीमज्जीवानन्दविद्यासागरात्मजाभ्यां
पण्डित-श्रीआशुबोध-विद्याभूषण-पण्डित-श्रीनित्यबोध-
विद्यारत्नाभ्यां प्रकाशितः ।

तृतीय संस्करणम् ।

कलिकातामहानगर्य्याम्
वाचस्पत्ययन्त्रे
मुद्रितः ।
इं १९१५ ।

 मूल्यं मुद्राभावकम् ।

प्रकाशक—{ पण्डित-श्रीआशुबोध-विद्याभूषण
तथा
पण्डित-श्रीनित्यबोध-विद्यारत्न ।

प्राप्तिस्थान—{ २न०, रमानाथ मजुमदार ष्ट्रीट्, ह्यारिसन-
रोड—पोष्ट अफिस । कलिकाता ।

प्रिण्टर—वि, वि, मुखर्जी ।
२ न०, रमानाथ मजुमदार ष्ट्रीट्, कलिकाता ।

# वेदान्तसारः।

अखण्डं सच्चिदानन्दमवाङ्मनसगोचरम्।
आत्मानमखिलाधारमाश्रयेऽभीष्टसिद्धये ॥ १ ॥

---

कृष्णानन्दं गुरुं नत्वा परमानन्दमद्वयम्।
वक्ष्ये वेदान्तसारस्य टीकां नाम्ना सुबोधिनीम् ॥

इह खलु कश्चिन्महापुरुषो नित्याध्ययनविध्यधीतसकलवेदराशीनां चिन्मात्राश्रयतद्रूपाद्वयानन्दविषयानाद्यनिर्वचनीयभावरूपाज्ञानविलसितानन्तभवानुष्ठितकाम्यनिषिद्धवर्जितनित्यनैमित्तिकप्रायश्चित्तोपासनाकर्मभिः सम्यक् प्रसन्नेश्वराणामिष्टकाचूर्णादिसङ्घर्षिताऽऽदर्शतलवदतिनिर्मलाशयानां नलिनीदलगतजलबिन्दुवद्धिरण्यगर्भादिस्तम्बपर्य्यन्तं जीवजातं स्वात्मवत् मृत्योरास्यान्तर्गतं क्षणभङ्गुरं तापत्रयाग्निसन्दह्यमानम् अनिशमात्मन्यनुपश्यतामतिविवेकिनामत एव ऐहिकस्रक्चन्दनादिविषयभोगेभ्यः आमुष्मिकहैरण्यगर्भाद्यमृतभोगेभ्यश्च वान्ताशन इवातिनिर्विण्णमानसानां शमादिसाधनसम्पन्नानाम् आपाततो-

---

सत्यं ज्ञानमनन्तं परिपूर्णानन्दविग्रहं रामम्।
प्रत्यक्षमनृतविश्वसृष्टिस्थित्यप्ययं वन्दे ॥ १ ॥
वाणीकायमनोभिः श्रीगुरुविद्यागुरुन्नमस्कृत्य।
वेदान्तसारटीकां कुर्वे श्रद्धावशाद् यथाबुद्धि ॥ २ ॥

चिकीर्षितस्य ग्रन्थस्याविघ्नपरिसमाप्तिप्रचयगमनशिष्टाचारपरिपालनफलं विशिष्टशिष्टाचारानुमितस्मृतिपरिकल्पितश्रुतिबोधितकर्त्तव्यताकं स्वाभिमतदेवतातत्त्वा

ऽधिगताखिलवेदार्थत्वात् देहाद्यहङ्कारपर्य्यन्तजड़पदार्थतद्विलक्षणस्वप्रकाशस्वरूपे प्रत्यगात्मनि ब्रह्मानन्दत्वे संशयापन्नानां तज्जिज्ञासूनाम् अल्पश्रवणेन मूलाज्ञाननिवृत्तिपरमानन्दावाप्तिसिद्धये प्रकरणमारभमाणः समाप्तिप्रचयगमनादिफलक-शिष्टाचारपरिप्राप्तेष्टदेवतानमस्कारलक्षणमङ्गलाचरणस्य अवश्यकर्त्तव्यतां दर्शयन् लक्षणया अनुबन्धचतुष्टयं निरूपयन् परमात्मानं नमस्कुरुते, अखण्डमित्यादिना।—अभीष्टस्य निःश्रेयसस्य सिद्धये प्राप्त्यर्थम्, आत्मानम् आश्रये एकत्वेन प्रतिपद्ये इत्यर्थः।

नन्वविषयस्यात्मनः कथं प्रतिपत्तिः ? इत्याशङ्क्याह, अखिलाधारमिति।—अखिलस्य चराचरात्मकप्रपञ्चस्य विवर्त्ताधिष्ठानत्वेन कारणत्वाक्रान्तं ब्रह्मैव प्रतिपद्ये, न तु शुद्धमित्यर्थः।

नन्वेवं सति प्रतिपत्तिविषयत्वेन दृश्यत्वापत्तिमाशङ्क्याह, अवाङ्मनसगोचरमिति।—"यतो वाचो निवर्त्तन्तेऽप्राप्य मनसा सह" [ तैत्ति० उप० २ वल्ली ४ अनुवाकः १ मन्त्रः, तथा तत्रैव

---

सन्धानात्मकं मङ्गलमाचरति, अखण्डमित्यादिश्लोकेन। आत्मानमाश्रय इत्यन्वयः। यद्यपि ग्रन्थकरणादिकार्य्यारम्भे गणेशसरस्वत्यादिदेवताभेदं विघ्नविघातविद्यास्फूर्त्तिप्रदत्वेन प्रसिद्धमनुसन्दधति शिष्टाः, तथापि "एष उ ह्येव सर्वे देवाः" [ बृह० १अ० ४ब्रा० ६ मन्त्रः ] इति श्रुतेरात्मन एव सर्वदेवतात्मकत्वावगमादात्मानुसन्धाने सति सर्वदेवताऽनुसन्धानं भवतीति मन्यते ग्रन्थकारः। आत्मानं विशुद्धचिद्रूपं त्वम्पदलक्ष्यं तुरीयमाश्रये शास्त्राचार्य्यप्रसादाभिव्यक्तमनुसन्दधे। अस्यात्मनस्तत्पदलक्ष्यपरमात्मानन्यस्वरूपं वाक्यार्थं कथयितुं तत्पदार्थं शोधयति, अखण्डं सच्चिदानन्दमिति।

"आनन्दादयः प्रधानस्य" [ ब्रह्म० सू० ३अ० ३पा० ११सूत्र० ] इति न्यायेन "सत्यं ज्ञानमनन्तं ब्रह्म" [ तैत्ति० २ वल्ली० १ अनु० ] "विज्ञानमानन्दं ब्रह्म" [ बृह० ३अ० ९ब्रा० २८मन्त्रः ] इति श्रुत्योः परस्परैकवाक्यतामभिप्रेत्य अखण्डेत्यादिभिरानन्दपदस्य समासः। अखण्डशब्दोऽनन्तपदपर्य्यायः, स चाविद्याध्यस्तदेशकालवस्तुभ्यः परमात्मनः परिच्छेदं व्यावर्त्तयत्येव नञ्पदयोगात्। तदुक्तम्,—"तत्रानन्तोऽन्तवद्वस्तुव्यावृत्त्यैव विशेषणम्" [ सुरे० तैत्ति० वा० २।७८ ] इति। इतराणि तु पदानि स्वार्थापरित्यागेनैव

ब्रह्मानन्दवल्ल्यां नवमानुवाके ] इत्यादिश्रुतिभिरविषयत्वप्रतिपादनात्। प्रतिपत्तिविषयत्वं कारणत्वोपलक्षितब्रह्मविषयकत्वेनौपचारिकमिति भावः।

नन्वेवमपि ब्रह्मणः कारणत्वे मृत्पिण्डवदनित्यत्वशङ्काम् अपहरन्नाह, सदिति।—नाशाभावोपलक्षितस्वरूपं, "सदेव सौम्येदमग्र आसीत्" [ छान्दो० उप० ६ अध्या० २ खण्ड० १ मन्त्रः ] इत्यादिश्रुतेः।

ननु तथापि जड़त्वापत्तिमाशङ्क्याह, चिदिति।—स्वप्रकाशचैतन्यस्वरूपमिति यावत्।

---

स्वविरोध्यर्थव्यावृत्तं ब्रह्म लक्षयन्ति। तदुक्तम्,—"स्वार्थार्पणप्रणाड्या च परिशिष्टौ विशेषणम्" [ सुरे० तैत्ति० वा० २।७९ ] इति। परिशिष्टौ सत्यज्ञानशब्दावित्यर्थः। अखण्डमपि तदनृतं शून्यं वा स्यादित्यत आह सदिति।

सत् अनृतशून्यव्यावृत्तं बाधाभावोपलक्षितस्वरूपं सत्तात्मकमिति यावत्। ब्रह्मणोऽप्यनृतत्वे निरधिष्ठानारोपप्रसङ्गात्। शून्यस्य ससाक्षिकत्वे तु सर्वशून्यवादानुपपत्तेः, असाक्षिकत्वे तु तदसिद्धेः, स्वप्रकाशत्वे च ब्रह्मण एव नामान्तरत्वापत्तेर्न ब्रह्म अनृतं शून्यं वेत्यर्थः। अखण्डं सदपि तत्तमोवज्जडं किं न स्यादित्यत आह चिदिति।

चित् ज्ञानं ज्ञप्तिरिति पर्य्यायः। श्रुतौ "ज्ञानं ब्रह्म" इति सामानाधिकरण्यात् गुणत्वे तस्य तदनुपपत्तेः। न च शुक्लो घट इतिवत् तत् स्यादिति वाच्यं, निर्धर्म्मकत्वप्रतिपादकाऽस्थूलादिश्रुतिविरोधात्। किञ्च, ज्ञानस्य नित्यत्वेऽग्न्युष्णवत् सवितृप्रकाशवच्च ब्रह्मस्वभावानतिरेकात्। अनागमापायिधर्म्मस्य धर्म्मिणः परमार्थतो भिन्नत्वे प्रमाणाभावात् अनित्यत्वे ज्ञानानवस्थाप्रसङ्गात्। कार्य्यस्य सतो ज्ञानस्यापि कार्य्यान्तरवत् स्वोपादानगोचरापरोक्षज्ञानजन्यत्वात्। ज्ञानोपादानब्रह्मगोचरस्यापि ज्ञानस्य कार्य्यत्वे तस्यापि पूर्वसमानयोगक्षेमतया कथं नानवस्था? अजन्यत्वे प्रथमे कः प्रद्वेषः? तथा च सिद्धा ब्रह्मणो ज्ञानस्वभावता; एतेन जीवात्मनोऽपि ज्ञानस्वभावता व्याख्याता वेदितव्या। स्वप्रकाशं चैतद्ब्रह्म एष्टव्यम्, अप्रकाशजड़विलक्षणत्वनिर्देशसामर्थ्यात्। "तद्देवा ज्योतिषां ज्योतिः" [ बृह० ४अ० ४ब्रा० १६मन्त्रः ] "तस्य भासा सर्वमिदं विभाति" [ कठ० २ अ० ५ वल्ली० १५ मन्त्रः ] इत्यादिश्रुतेः।

ननु तथाऽप्यपुरुषार्थत्वात् किमित्याश्रयणीयम्? इत्यत आह, आनन्दमिति।—परमानन्दस्वरूपमित्यर्थः।

---

नन्वेवमखण्डसच्चिद्रूपमपि ब्रह्म न प्रेक्षावत्प्रमागोचरः सुखदुःखाभावतत्साधनानाम् अन्यतमत्वाभावात्। न तावत् स्वसुखदुःखाभावसाधनं ब्रह्म स्वस्मिन् सुखदुःखयोर्नित्य-निवृत्तत्वात् "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" [ छान्दो० ८अ० १२खण्ड० १मन्त्रः ] इति श्रुतेः। नाप्यन्यगतसुखादिसाधनं ब्रह्म, अन्येषां दृष्टादृष्टसुखदुःखप्राप्ति-परिहारयोर्लौकिकवैदिकसाधनेभ्य एव सिद्धेः। तस्मान्न सुखादिसाधनं ब्रह्म; नापि दुःखाभावरूपं, भावात्मस्वभावताविरोधात्। नापि सुखात्मकं, तथात्वे प्रमाणाभावा-दित्यत आह आनन्दमिति।—आनन्दं सुखरूपम्।

न च ब्रह्मण आनन्दात्मत्वे प्रमाणाभावः "विज्ञानमानन्दं ब्रह्म" [ बृह० ३अ० ९ ब्रा० २८ मन्त्रः] "आनन्दो ब्रह्मेति व्यजानात्" [ तैत्ति० उप० ३ वल्ली० ६ अनु० ] "आनन्दरूपममृतं यद्विभाति" [ मुण्ड० २ मु० २ खण्ड० ७ मन्त्रः ] "को ह्येवान्यात्कः प्राण्याद् यदेष आकाश आनन्दो न स्यात्" [ तैत्ति० उप० २ वल्ली० ७ अनु०] इत्यादि श्रुतेः प्रमाणत्वात्। न चानन्दब्रह्मणोर्धर्मधर्मिताशङ्काप्यवकाशं लभते, श्रुतिस्वारस्य भङ्ग-प्रसङ्गात। न च ब्रह्मण ईश्वरस्य सुखित्वं परैरपीष्यते; अत आनन्दो विद्यतेऽस्मिन्नित्या-नन्दं ब्रह्मेति परेषां श्रुतिव्याख्यानमुपहासास्पदमेव। न च ब्रह्मण्यानन्दशब्दो दुःखा-भावपरः; "आनन्दो ब्रह्मेति व्यजानात्" [ तैत्ति० उप० ३ वल्ली० ६ अनु० ] इति भावरूपब्रह्मसामानाधिकरण्यनिर्देशविरोधात्। न च प्रियास्पर्शित्वश्रुतिविरोधः, तस्याः श्रुतेर्वैषयिकप्रीतिनिषेधपरत्वादिति भावः।

यद्यप्यानन्दमितीह शेषिपदं, तथापि श्रुत्युपरोधात्पदार्थशोधनार्थतया च ब्रह्मपदमध्याहृत्य विशेष्यं बोद्धव्यम्। एवं सत्यखण्ड सच्चिदानन्दं ब्रह्मात्मानमाश्रय इति ब्रह्मात्मपदयोः सामानाधिकरण्येन तत्त्वं पदार्थयोरैक्यं वाक्यार्थः अब्रह्मत्वपारोक्ष्य-निवृत्त्या परिपूर्णतया निरूपितः स्यात्, नान्यथा। एतेषाञ्च पदानां ब्रह्मपदेन प्रत्येकं प्रथममन्वितानां पश्चात् सामानाधिकरण्येन परस्परमपि सम्बन्धसिद्धिः। "अरुणया पिङ्गाक्ष्या गवैकहायन्या सोमं क्रीणाति" [ तैत्ति० सं० ६।१।६।७ ] इत्यत्र क्रयवाचि-पदान्वितानामरुणादिपदानामिव परस्परान्वयः। न चैकार्थत्वे सति आदिपदानां पर्यायतापत्तिरयौगपद्यं चेति वाच्यं, प्रवृत्तिनिमित्तभेदाद्व्यावर्त्यभेदाच्च उक्तदोषानव-तारात्। एवमन्योऽपि वाक्यविचारोपयोगी न्याय ऊहनीयः, विस्तरभयान्नेह लिख्यते। एवं विधिमुखेन परिच्छिन्नानृतजड़दुःखरूपानात्मतद्धर्मविलक्षणं ब्रह्मेति निरूप्येदानीं

ननु तथापि "भक्षितेऽपि लशुने न शान्तो व्याधिः" इति न्यायेन प्रपञ्चस्याधिष्ठानव्यतिरिक्ततया प्रतीयमानत्वात् कथम् अद्वैतसिद्धिः? इत्याशङ्कां तृणीकुर्वन्नाह, अखण्डमिति।— सजातीयविजातीयस्वगतभेदशून्यमित्यर्थः।

अत्र सच्चिदानन्दमिति प्रयोजनम्, अखण्डमिति विषयः, शास्त्रविषययोः प्रतिपाद्यप्रतिपादकभावः सम्बन्धः, तत्कामोऽधिकारी, इत्यनुबन्धचतुष्टयमर्थादुक्तं भवति ॥ १ ॥ सु०।

---

"नेति नेति" [ बृह० २अ० ३ब्रा० ६मन्त्रः ] "अस्थूलं" [ बृह० ३अ० ८ब्रा० ८मन्त्रः ] "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" [ तैत्ति० उप० २ वल्ली० ४ अनु० ] इत्यादि श्रुतिमाश्रित्य निषेधमुखेन सकलनिषेधावधिभूतं सत्यस्य सत्यं ब्रह्मेति दर्शयति, अवाङ्मनसगोचरमिति।

वाक् च मनश्च वाङ्मनसे तयोर्गोचरो वाङ्मनसगोचरः, न वाङ्मनसगोचरोऽवाङ्मनसगोचरस्तमिति विग्रहः। "नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा" [ कठ० २ अ० ६ वल्ली० १२ मन्त्रः ] "अस्तीत्येवोपलब्धव्यः" [ कठ० २ अ० ६ वल्ली० १३मन्त्रः ] इति च काठकश्रुतेः। एवं विधिनिषेधाभ्यां ब्रह्मणः स्वरूपलक्षणमभिधाय लक्षितं स्वरूपं तटस्थलक्षणेन सम्भावयति, अखिलाधारमिति।

अखिलस्य आकाशादिप्रपञ्चस्याधार आश्रयस्तमिति विग्रहः। आश्रयशब्दः सृष्टिप्रलययोरप्युपलक्षणार्थः। तथा च श्रुतिः,—"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद्व विजिज्ञासस्व तत् ब्रह्मेति" [ तैत्ति० उप० ३वल्ली० १अनु० ] इति। ततश्च जगदुत्पत्तिस्थितिलयकारणं ब्रह्मेत्युक्तं भवति। अत इदं फलितम्। सत्यज्ञानानन्तानन्दैकरसं ब्रह्म तत्पदलक्ष्यमिति। आत्मपदादेव त्वम्पदार्थशुद्धिः। "आत्मेत्येवोपासीत अत्र ह्येते सर्वं एकं भवन्ति" [ बृह० १ अ० ४ ब्रा० ७ मन्त्रः ] इति श्रुतावात्मशब्दस्य निर्विशेषप्रत्यक्चैतन्यमात्रनिष्ठतया निर्द्धारितत्वात्। तथा च ब्रह्मात्मपदयोः सामानाधिकरण्यादैक्यवाक्यार्थसिद्धिरित्युक्तं तदेव वाक्यार्थभूतमात्मानमाश्रये; किमर्थम्? अभीष्टसिद्धये। अभीष्ट शास्त्रार्थाप्रतिपत्त्यन्यथाप्रतिपत्तिविप्रतिपत्तिनिरासलक्षणं यथाशास्त्रमर्थसङ्ग्रहसामर्थ्यलक्षणञ्च, तस्य सिद्धिः सम्पत्तिः तस्यै तदर्थमित्यर्थः ॥ १ ॥ विद्व०।

अर्थतोऽप्यद्वयानन्दानतीतद्वैतभानतः।
गुरूनाराध्य वेदान्त-सारं वक्ष्ये यथामति ॥ २ ॥

किञ्च,—"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥"[श्वेता० ६अ० २३मन्त्रः] इत्यादिश्रुत्या गुरुनमस्कारस्यापि शास्त्राङ्गत्वप्रतिपादनात् तत्-नमस्कारोऽपि पृथक्त्वेन कार्य्यः इति तन्नतिपूर्वकमभिधेयग्रन्थं प्रतिजानीते, अर्थतोऽपीति।—अपिशब्देन न केवलं शब्दतो डित्थादिवत् संज्ञामात्रं व्यवस्थितम्, अपि तु अर्थतः शब्दतश्चेति। अद्वयानन्दरूपान् गुरून् आराध्य वेदान्तसारं यथामति वक्ष्ये इत्यन्वयः। अद्वयाश्च ते आनन्दाश्चेति अद्वयानन्दास्तान्। तत्र हेतुमाह, अतीतद्वैतभानत इति।—अतीतं गतं

एवं शास्त्रप्रतिपाद्यपरदेवतातत्त्वानुस्मरणलक्षणं मङ्गलं विधाय इदानीं "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ" [श्वेता० ६अ० २३मन्त्रः] इत्यादिशास्त्रात् देवताभक्तिवद् गुरुभक्तेरपि विद्याङ्गत्वप्रतीतेः "देवमिवाचार्य्यमुपासीत" [आप० १।६।१३] इत्यादिस्मृतेश्च गुर्वाराधनोक्तिपूर्वकं स्वचिकीर्षितं प्रतिजानीते, अर्थत इति श्लोकेन।

वेदान्तो वक्ष्यमाणलक्षणस्तस्य सारो मथितार्थस्तं वक्ष्ये; तच्च यथामति स्वमत्यनुसारेण, अनन्तशाखाप्रविततस्यातिगम्भीरार्थस्य वेदान्तस्यार्वाग्बुद्धिभिरपरिच्छेदात्। तदुक्तमभियुक्तैः,—"गुरुचरणसरोजसन्निधानादपि वयमस्य गुणैकदेशभाजः। अपि महति जलार्णवे निमग्नाः सलिलमुपाददते मितं हि मीनाः॥", इति [सङ्क्षेपशारीरकम् १।९]।

एतच्च गर्वपरिहारार्थोक्तिवचनं न पुनर्वादिभयनिमित्तं यथाशास्त्रमर्थसङ्ग्रहादित्यर्थः। किं कृत्वा? गुरूनाराध्य; भक्तिश्रद्धातिशयस्तुतिनमस्कारादिना देवमिव पूजयित्वा। गुरूनित्येकस्मिन् बहुवचनं पूजार्थम्। किं नामानो गुरवः? इत्यपेक्षायां स्वस्य साम्प्रदायिकत्वज्ञापनाय तान् नामतो निर्दिशति, अद्वयानन्दानिति।—नाम्नो डित्थादिवत् संज्ञामात्रत्वं व्यावर्त्तयति, अर्थत इति। अपिशब्दः शब्दार्थयोः समुच्चयार्थः, न केवलं शब्दतः किन्तु अर्थतोऽपीति।

तत्र हेतुः अतीतद्वैतभानत इति। अतीतं द्वैतं यस्मात् तत् अतीतद्वैतं प्रत्यगात्मतत्त्वं

वेदान्तो नाम,—उपनिषत्प्रमाणं, तदुपकारीणि शारीरकसूत्रादीनि च ॥ ३ ॥

---

द्वैतभानं यतः तस्मादतीतद्वैतभानतः, निरस्तसमस्तभेदज्ञानत्वादित्यर्थः। तान् गुरून् आराध्य कायवाङ्मनोभिर्नमस्कारगोचरीकृत्य वेदान्तसारं वेदान्तानामुपनिषद्वाक्यजातानां मध्ये यः सारः सिद्धान्तरहस्यं, यस्मिन् ज्ञाते पुनर्ज्ञातव्यं नावशिष्यते, तं वेदान्तसारं यथामति बुद्धिमनतिक्रम्य वक्ष्ये प्रतिपादयिष्ये इत्यर्थः ॥ २ ॥ सु०।

इदानीं सर्वस्यापि वस्तुविचारोद्देशपूर्वकत्वात् प्रतिज्ञातं वेदान्तं नामतो निर्दिशति, वेदान्त इति।—उपनिषद एव प्रमाणम् उपनिषत्प्रमाणम् ; उपनिषदो यत्र प्रमाणमिति वा।

---

तस्य भानं साक्षात्कारः तस्मात् अतीतद्वैतभानतः। अतीतद्वैतभावत इति पाठे—तत्त्वज्ञानविध्वस्तनिखिलभेदब्रह्मात्मत्वादित्यर्थः ॥ २ ॥ विद्व०।

ब्रह्मात्मप्रतिपत्तिपरेषु श्रुतिसूत्रेषु विद्वन्निर्मितनिबन्धेषु चाविशेषेण वेदान्तशब्दस्य लोके प्रयोगदर्शनात् सर्वत्र मुख्यवृत्तितः प्रतीतिं वारयन् मुख्यगौणभेदेन वेदान्तशब्दं व्युत्पादयति, वेदान्तो नामेत्यादिना।—उपनिषच्छब्दो ब्रह्मात्मैक्यसाक्षात्कारविषयः, उप-नि-पूर्वस्य क्विप्प्रत्ययान्तस्य "षद्लृ विशरणगत्यवसादनेषु" इत्यस्य धातोरुपनिषदिति रूपम्। तत्र उपशब्दः सामीप्यमाचष्टे, तच्च सङ्कोचकाभावात् सर्वान्तरे प्रत्यगात्मनि पर्य्यवस्यति। निशब्दो निश्चयवचनः, सोऽपि तत् तत्त्वमेव निश्चिनोतीति तन्नैकट्यवाच्युपशब्दसामानाधिकरण्यात्। तस्मात् ब्रह्मविद्या स्वसंशीलिनां संसारसारतामतिं सादयति विषादयति शिथिलयतीति वा, परमश्रेयोरूपं प्रत्यगात्मानं सादयति गमयतीति वा, दुःखजन्मप्रवृत्त्यादिमूलाज्ञानं सादयति उन्मूलयतीति वा उपनिषत्पदवाच्या। सैव प्रमाणम्। तस्याः प्रमारूपायाः करणभूतः सर्वशाखासु उत्तरभागेषु पठ्यमानो ग्रन्थराशिरप्युपचारात् प्रमाणमित्युच्यते। तथा चोपनिषदः प्रमाणं प्रमाकरणमुपनिषत्प्रमाणं वेदान्त इत्यर्थः। तदुपकारीणि वेदान्तार्थविचारानुकूलानीति यावत्। तदनुकूलत्वं वेदान्तवाक्यप्रमेयासम्भावनापोहद्वारा

**अस्य वेदान्तप्रकरणत्वात् तदीयैरेवानुबन्धैः तद्वत्तासिद्धेर्न ते पृथगालोचनीयाः ॥ ४ ॥**

---

तदुपकारीणि वेदान्तवाक्यसङ्ग्राहकाणि शारीरकसूत्रादीनि च; शरीरमेव शारीरं, तत्र भवो जीवः शारीरकः, स सूत्र्यते याथातथ्येन निरूप्यते यैः तानि शारीरकसूत्राणि, "अथातो ब्रह्मजिज्ञासा" [ ब्र० सू० १अ० १पा० १सू० ] इत्यादीनि। आदिशब्दो भाष्यादिसङ्ग्रहार्थः। च-शब्दो वेदान्तशब्दानुषङ्गार्थः; यद्वा—शारीरकसूत्राणि तद्यथार्थवादिवेदान्तार्थ-सङ्ग्रहवाक्याणि। "अथातो ब्रह्मजिज्ञासा" इत्यादिसूत्रादीनि। आदिशब्देन भगवद्गीताद्यध्यात्मशास्त्राणि गृह्यन्ते, तेषामपि उपनिषच्छब्दवाच्यत्वादिति भावः ॥ ३ ॥ सु० ।

ननु यद्यपि अवान्तरानुबन्धचतुष्टयमापद्येतेति अर्थात् निर्दिष्टं, तथापि परमानुबन्धचतुष्टयस्यानिरूपितत्वादत्र

---

न तु प्रमित्युत्पत्तौ तत्फले वा साक्षाद्विचारशास्त्रस्याङ्गभावः, तथा सति वेदान्तवाक्यानां सापेक्षताप्रसङ्गात्। तदुक्तमभियुक्तैः,—"स्वाध्यायवन्न करणं घटते विचारो नाप्यङ्गमस्य परमात्मधियः प्रसूतौ। सापेक्षता पतति वेदगिरस्तथात्वे ब्रह्मात्मनः प्रमितिजन्मनि तन्न युक्तम् ॥" इति [ सङ्क्षेपशारीरकम् १।१८ ]। शरीरमेव शरीरकं तत्र भवो जीवः शारीरकः स सूत्र्यते यायातथ्येन निरूप्यते यैस्तानि शारीरकसूत्राणि, "अथातो ब्रह्मजिज्ञासा" [ ब्रह्म० सू० १।१।१ ] इत्यादीनि। यद्वा—शारीरकस्य सूत्राणि तद्याथात्म्यवादिवेदान्तार्थसङ्ग्रहवाक्याणि। आदिशब्दो भाष्यादिसङ्ग्रहार्थः, चशब्दो वेदान्तशब्दानुषङ्गार्थः; तथा च वेदानामन्तोऽवसानभागो वेदान्त इति व्युत्पत्तियोगात् मुख्यो वेदान्तशब्दो वेदभागभेदेषु शारीरकादौ तूपचरित इति व्युत्पादितः ॥ ३ ॥ विद्व० ।

ननु किं पुनरस्य ग्रन्थस्यारम्भे निमित्तम्? न खलु निर्निमित्ता प्रेक्षावत्प्रवृत्तिरिति चेत् को भावः? निमित्तमात्राक्षेप इति चेत् न, अशनायाद्यनेकोर्मिमालाकुलसमुद्भूत-क्षोभहतविवेकविज्ञानपाथसि दृढतरकामक्रोधाद्युत्तुङ्गशैलजालविषमे सुतदुहितृ-

तत्रानुबन्धो नाम,—अधिकारिविषयसम्बन्ध-प्रयोजनानि ॥ ५ ॥

---

प्रेक्षावतां प्रवृत्तिः न स्यादित्यत आह, अस्येति।—अस्य वेदान्तसारस्येत्यर्थः ॥ ४ ॥ सु० ।

ननु वेदान्तशास्त्रस्यापि किमनुबन्धचतुष्टयं येनास्यापि तद्वत्तासिद्धिः? इत्याशङ्क्य मूलशास्त्रस्य अनुबन्धचतुष्टयम् आविष्करोति, तत्रानुबन्ध इति ॥ ५ ॥ सु० ।

---

कलत्रबान्धवाद्यनेकमकरनक्रचक्राकुलं नरमृगपशुपक्षिदेवादिस्थानभोगफेनबुद्बुदं संसारसागरेऽनवरतमधः ऊर्द्धं तिर्य्यग्वा मज्जनोन्मज्जनादिविवशानतिविततगम्भीरार्थानेकशास्त्रवेदान्तविचारमहाद्रुमावलम्बनासमर्थान् दुःखिनो लोकानालोक्य सञ्जातकरुणाया निमित्तलोपपत्तेः। अथ निमित्तविशेषापेक्षयेत् तत्राह, अस्येति।

"शास्त्रैकदेशसम्बद्धं शास्त्रकार्य्यान्तरे स्थितम्। आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः" ॥ [ पराशरोपपुराण १८।२१।२२ ] इति हि प्रकरणलक्षणं वदन्ति। तथा च यच्छास्त्रैकदेशसम्बद्धं यत्प्रकरणं तत्तच्छास्त्रीयैरेवानुबन्धैरनुबन्धयुक्तम्; अन्यथा शास्त्रप्रकरणयोर्भिन्नविषयादिमत्त्वेन शास्त्रासम्बद्धत्वप्रसङ्गात् असम्बद्धप्रलपितमिदमापद्येत। अतोऽस्य ग्रन्थस्य वेदान्तशास्त्रीयप्रकरणत्वात् वेदान्तशास्त्रसिद्धैरेवानुबन्धैस्तद्वत्तासिद्धेर्न तेऽनुबन्धाः पृथगालोचनीया इत्यर्थः।

ननु महाविषयादेरिह शास्त्रीयत्वेऽप्यवान्तरविषयादेः पृथगालोचनमुचितम्, इतरथा शास्त्रं परित्यज्य प्रेक्षावतोऽत्रप्रवृत्त्ययोगादिति चेत् बाढं प्रकरणत्वेनैव अवान्तरसङ्गतेः सुलभालोचनत्वात् पृथगिह निर्देशानपेक्षणात्; तथा हि सारग्रहणेच्छुरवान्तराधिकारी; सगुणनिर्गुणरूपविषयभेदं परित्यज्य निर्गुणसारमात्रमिह विषयः; तन्मात्रावधारणमवान्तरप्रयोजनम्; सम्बन्धोऽपि विषयानुरूप इति भावः ॥ ४ ॥ विद्व० ।

ननु शास्त्रीयोऽनुबन्धः शास्त्रविद्भिरेव विज्ञायते, न व्युत्पित्सुभिः, तत्कथमिह तेषां शास्त्रीयविषयाद्यनभिज्ञानां प्रवृत्तिः? इत्याशङ्क्य शास्त्रीयमेवानुबन्धं सङ्क्षेपतो व्युत्पादयितुमुपक्रमते, तत्रानुबन्धो नामेत्यादिना।—तत्र वेदान्तशास्त्रे। स्वार्थप्रतिपत्तारमनाश्रित्य शास्त्रस्य प्रवृत्त्ययोगात् आदौ अधिकार्य्यनुबन्धापेक्षा, तस्य च विषयबोधमन्तरेणाप्रवृत्तेर्विषयस्य तदानन्तर्य्यं, विषयस्य च शक्यप्रतिपाद्यत्वसिद्धये सम्बन्धस्य

**अधिकारी तु,—विधिवदधीतवेदवेदाङ्गत्वेन**

यथोद्देशमधिकारिणं लक्षयति, अधिकारी त्वित्यादिना ।—"स्वाध्यायोऽध्येतव्यः" [ तैत्ति० आर० २।१५।७ ] इति वचनात् त्रैवर्णिकानामुपनीतानामध्ययनं नियमेन विधीयते ; अध्ययनविधिप्रयुक्तमेवाध्ययनं, नाध्यापनविधिप्रयुक्तम् ; तथा च, अधीतो वेदो वेदाङ्गानि च शिक्षा-कल्प-व्याकरण-छन्दो-ज्योतिर्निरुक्ताख्यानि येन तस्य भावः इति अधीतवेदवेदाङ्गत्वं तेन ।

---

विषयानन्तर्य्यं, प्रयोजनस्य चरमत्वं पनिड्मित्युद्देशपाठक्रमो विवक्षितः। तथा च शारीरकसूत्रं "अथातो ब्रह्मजिज्ञासा" [ ब्रह्म० सू० १।१।१ ] इति ॥ ५ ॥ विद्व० ।

तत्र यथोद्देशक्रममधिकारिणं निरूपयति, अधिकारी त्विति । धर्म्मजिज्ञासाऽधिकारिणोऽस्य वैलक्षण्यसूचनार्थस्तुशब्दः। प्रमाताऽधिकारीत्यन्वयः। लौकिकवैदिकव्यवहारेष्वभ्रान्तो जीवः प्रमाता इह विवक्षितो जीवमात्रस्य भ्रमसम्भवेन शास्त्रार्थप्रतिपत्त्ययोगात् । तस्य तुशब्दसूचितं विशेषमाह, साधनचतुष्टयसम्पन्न इति ।—वक्ष्यमाणसाधनचतुष्टयविशिष्ट इत्यर्थः। अयं भावः,—न तावद्वेदाध्ययनं ब्रह्मजिज्ञासाऽधिकारहेतुः तस्य धर्म्मब्रह्मजिज्ञासयोः साधारणत्वात् तन्मात्रेण इह नियमेन प्रवृत्त्यनुपपत्तेः। नापि धर्म्मविचारः, प्रागपि धर्म्मविचारादधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः। नापि धर्म्मानुष्ठानमिह जिज्ञासाहेतु विनाऽपि धर्म्मानुष्ठानं ब्रह्मचर्य्यादेव विरक्तस्य ब्रह्मजिज्ञासादर्शनात् । श्रुतिश्च भवति विविदिषोः सन्न्यासविधायिनी "यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेत्" [ जावा० उप० ४ मन्त्रः ] इत्यादिका ।

ननु "जायमानो वै ब्राह्मणस्त्रिभिः ऋणवान् जायते, ब्रह्मचर्य्येण ऋषिभ्यः, यज्ञेन देवेभ्यः, प्रजया पितृभ्य एव वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वासि" [ तैत्ति० सं० ६।३।१०।५ ] इति श्रुतेः। "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् । अनपाकृत्य मोक्षन्तु सेवमानः पतत्यधः ॥" [ मनु० ६ अ० ३५ श्लोकः ] इति स्मृतेश्च ऋणत्रयापाकरणमन्तरेण मोक्षशास्त्रविचारप्रवृत्त्ययुक्ततायाः गम्यमानत्वात् कथं धर्म्ममननुष्ठाय सन्न्यासपूर्व्वकं ब्रह्मविचारे प्रवृत्तिरिति चेत् ? उच्यते—श्रुतिस्तावत "हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः" [ तैत्ति० सं० ६।३।१०।४ ] इति पञ्चावदानत्रयविधिमुपक्रम्य "तदवदानैरेवावदयते तदवदानानामवदानत्वम्" [ तैत्ति० सं० ६।३।१०।५ ]

आपाततोऽधिगताखिलवेदार्थः, अस्मिन् जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्जनपुरःसरं नित्य-

---

आपाततोऽधिगताखिलवेदार्थः, इत्यत्र सर्ववेदार्थरहस्ये ज्ञाते सति उत्तरग्रन्थवैयर्थ्यपरिहाराय आपातत इत्युक्तम्।

नन्वनधीतवेदानामपि विदुरादीनां तत्त्वज्ञानोत्पत्तिदर्शनात् अध्ययन-तत्प्रयुक्तकर्मानुष्ठानवैयर्थ्यमाशङ्क्योत्तरमाह, जन्मान्तर इति।—तेषामाधुनिकाध्ययनाद्यभावेऽपि जन्मान्तरीयाध्ययनादिना चित्तपरिपाकवतामस्मिन् जन्मनि विनाऽप्यध्ययनादिना ज्ञानोत्पत्तौ बाधकाभावात् नाध्ययनादिवैयर्थ्यमिति भावः।

---

इत्यवदाननिर्वचनेन उपसंहारात् अवदानत्रयविध्यर्थवादत्वान्न स्वार्थपरा। अतः सा "ब्रह्मचर्यादेव" इति श्रुत्याऽनन्यपरया बाध्यते। यदि ब्रह्मचर्यादिभिरपाकरणीयम् ऋणत्रयमपि "अवदानैरेवावदयत" इत्यवदानश्रुतौ ब्रह्मचर्यादिः ऋणत्रयापाकरण-हेतुत्ववचनं स्वार्थपरमेवेति मतं, तथापि जातमात्रस्य ऋणत्रयसम्बन्धे प्रमाणा-भावात् अधिकारी जायमानो गृहस्थो वा जायमान इति वा व्याख्यानमुचितम्। स्मृतिस्त्वविरक्तविषयतया व्याख्येया। एतेन "यज्ञायुधी यजमानः" [ शत० ब्रा० १२।५।२।८ ] "जरया वाऽस्मान् मुच्यते" [ शत० ब्रा० १२।४।१।१ ] "वीरहा वा एष देवानां योऽग्निमुद्वासयत" [ तैत्ति० सं० १।५।२।१ ] इत्यादिश्रुतयः "ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्य" [ गौ० सं० ३।३६ ] इत्यादिस्मृतयश्च व्याख्याता वेदितव्याः। "ब्रह्मचर्यादेव प्रव्रजेत्" [ जाबा० उप० ४ ] "यदहरेव विरजेत् तदहरेव प्रव्रजेत्" [ जाबा० उप० ४ ] "अथ पुनरव्रती वा व्रती वा" [ जाबा० उप० ४ ] "किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे" [ ब्र० सू० भा० ३।४।९ ] "किं प्रजया करिष्यामो येषां नोऽयमात्मेति" [ बृह० उप० ४ अ० ४ ब्रा० २२ मन्त्रः ] "याज्ञवल्क्यः प्रवव्राज" [ बृह० ४ अ० ५ ब्रा० २५ मन्त्रः ] "ये प्रजामीषिरे ते श्मशानानि भेजिरे। ये प्रजां नेषिरे तेऽमृतत्वं हि भेजिरे" इत्यादिश्रुतिस्मृत्यविरोधात्। तस्मान्न धर्मानुष्ठानं ब्रह्मजिज्ञासाहेतुः। अतो ब्रह्मजिज्ञासा जायमाना यस्मिन् सत्येव नियमेन जायते यस्मिन्नसति नैव जायते तदेव तस्याः साधनमेषितव्यम्। तच्च वक्ष्यमाणं साधनचतुष्टयमेवेति। कस्मात्पुनः साधनसम्पन्नः? तत्राह नितान्त

नैमित्तिकप्रायश्चित्तोपासनाऽनुष्ठानेन निर्गत-निखिलकल्मषतया नितान्तनिर्मलस्वान्तः, साधन-चतुष्टयसम्पन्नः प्रमाता ॥ ६ ॥

काम्येति।—काम्यस्यापि कर्म्मणो धर्म्मसाधनत्वेऽपि यातायातसम्पादकत्वेन बन्धकत्वात् निषिद्धवत् तद्वर्जनपुरःसरमित्युक्तम्; तथा च नित्यादिकर्मानुष्ठानेन निर्गतनिखिलकल्मष-

इति।—नितान्तमत्यन्तं निर्म्मलं शुद्धं स्वान्तमन्तःकरणं यस्य स तथा। कुतः स्वान्तस्य नैर्म्मल्य प्रतिबन्धकरागादिवासनानिवृत्त्येत्याह, निर्गत इति।—रागादिवासनारूपकल्मषनिवृत्तिरपि कुतः? तत्राह नित्य इति।—काम्यकर्म्माभिरतस्यानुष्ठीयमानमपि नित्यादि न साक्षात्कल्मषनिवृत्तिहेतुः, कामवासनया शुद्धिप्रतिबन्धसम्भवात्, तथा निषिद्धावर्जने पापेन प्रतिबन्धादित्यभिप्रेत्य नित्याद्यनुष्ठानं विशिनष्टि, काम्यनिषिद्धवर्ज्जनपुरःसरमिति। एवं नित्याद्यनुष्ठानस्य शुद्धेश्चैकभविकत्वनियमं व्यावर्त्तयति, अस्मिन् जन्मनि जन्मान्तरे वा इति।—"अनेकजन्मसंसिद्धस्ततो याति परां गतिम्" [गीता ६ अ० ४५ श्लोकः] "न हि कल्याणकृत् कश्चित् दुर्गतिं तात गच्छति" [गीता ६ अ० ४० श्लोकः] इत्यादिस्मृतेर्जन्मान्तरानुष्ठितस्यापि जन्मान्तरोपकारकत्वसम्भवादिति भावः। एवं काम्यनिषिद्धवर्जनपुरःसरमिह जन्मनि जन्मान्तरे वाऽनुष्ठितनित्यादिक्षपितकल्मषस्य विवेकादिसाधनचतुष्टयसम्पत्तौ कारणमाह, आपाततः इति।—आपाततो विचारेणेदमित्थमेवेति पर्य्यवधारणमन्तरेणाधिगतोऽखिलो वेदार्थो येन स तथा। वेदशब्दो वेदान्तविषयः। वेदार्थज्ञाने हेतुमाह, विधिवत् इति।—"ब्राह्मणेन षड़ङ्गो वेदो निष्कारणोऽध्येयो ज्ञेयश्च" इति वचनात् नित्याध्ययन विध्युपस्थापितवेदान्तवचोभिर्निरुक्तव्याकरणाद्यङ्गोपकरणैरनवद्धृततात्पर्य्यलिङ्गैरधिगताखिलवेदान्तार्थ इत्यर्थः। एतदुक्तं भवति। वस्तुतः चित्सदानन्दब्रह्मस्वभावोऽप्यात्माऽनाद्यनिर्वाच्याविद्यासम्बन्धलब्धजीवभावोऽविद्याकामकर्म्मवशंगतः काम्यनिषिद्धाद्यनवरतमाचरंस्तत्फलभूतस्वर्गनरकौ भुञ्जानस्तद्भोगवासनावासितस्तदनुरूपं पुनः कर्म्म पुनः फलमित्येवं घटीयन्त्रवत्कुलालचक्रवच्चोर्द्धाधस्तिर्य्यग्भ्रमणमविश्रममनुभवन् हृष्टः कृतार्थो मूढ़ो दुःखी चेत्यात्मानं मृषैव मन्यते। स पुनः,—"एकः काम्योऽपरो नित्यस्तथा नैमित्तिकः परः। प्राधान्येन फलं शुद्धिरार्थिकी काम्यकर्म्मणः। प्राधान्येन

काम्यानि,—स्वर्गादीष्टसाधनानि ज्योतिष्टोमादीनि ॥ ७ ॥

निषिद्धानि,—नरकाद्यनिष्टसाधनानि ब्रह्महननादीनि ॥ ८ ॥

---

तया निःशेषनिरस्तसकलकल्मषत्वेन। अत्र निखिलपदं काम्यनिषिद्धजनितसुकृतदुष्कृतपरं, तेन नितान्तनिर्मलस्वान्तः; नितान्तमत्यन्तं निर्मलं स्वच्छं स्वान्तमन्तःकरणं यस्य सः तथोक्तः वक्ष्यमाणसाधनचतुष्टयसम्पन्नः प्रमाता, अन्तःकरणप्रतिबिम्बितचैतन्यमित्यर्थः ॥ ६ ॥ सु०

तदेव स्पष्टं व्याकरोति,—काम्यानीत्यादिना ॥ ७ ॥ सु०

---

मनःशुद्धिर्नित्यस्य फलमार्थिकम्। केवलं प्रत्यवायस्य निवृत्तिरितरस्य तु" ॥ इत्यादिपुराणवचनात् अतीतानेकजन्मसुकृतशाद्दिक्कपुण्यपुञ्जपरिपाकोदयवशात् काम्यफलेषु जातदोषबुद्धिराध्यात्मिकादिदुःखत्रयञ्च निषिद्धाचरणफलमाकलयन् काम्यनिषिद्धे परित्यजन्नीश्वरार्पणबुद्ध्याऽनुष्ठितनित्यादिक्षपितकल्मषतया नितान्तनिर्मलस्वान्तोऽधीतसाङ्गवेदार्थापातालोचनया लब्धविवेकादिसाधनसम्पन्नः स्वात्मयाथात्म्यजिज्ञासुर्वेदान्ताधिकारीति ॥ ६ ॥ विद्व०।

काम्यादिपदार्थान् कथयति, काम्यानीत्यादिना। फलोद्देशेन विधीयमानानि कर्म्माणि काम्यानि। न च "विश्वजिता यजेत" इत्यादावव्याप्तिः तत्रापि "स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात" [ मीमां० द० ४ अ० ३ पा० १५ सू० ] इति न्यायेन स्वर्गफलोद्देशेन विधेः साधितत्वात्। ज्योतिष्टोमशब्द ऐकाहिकविषयः। आदिशब्दोऽहीनसत्त्रसङ्ग्रहार्थः ॥ ७ ॥ विद्व०।

अमावगतेष्टसाधनतानिषेधकनञ्पदयोगिवाक्यगम्यानि निषिद्धानि। लिङाद्यनुषक्तनञ्योगिवाक्यगम्यानि वा। "नरकादि" इत्यादिपदादैहिकदुःखग्रहः। "ब्रह्महत्यादि" इत्यादिपदात् सुरापानादिग्रहः ॥ ८ ॥ विद्व०।

नित्यानि,—अकरणे प्रत्यवायसाधनानि सन्ध्यावन्दनादीनि ॥ ८ ॥

प्रत्यवायशब्देन आगामिदुःखमुच्यते। येषामकरणे विज्ञायमाने तत्साध्यते ज्ञाप्यते तानि नित्यानि इत्यर्थः, अकरणे प्रत्यवायलक्षणानि नित्यानीति यावत्। निर्निमित्तमुपात्तदुरितक्षयार्थानि नित्यानीति नित्यकर्म्मलक्षणं न तु अकरणे प्रत्यवायोत्पादकानि नित्यानीति। ननु—"अकुर्व्वन् विहितं कर्म्म निन्दितञ्च समाचरन्। प्रसज्जंश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः॥" [मनु० ११अ० ४४श्लोकः] इति स्मृतौ शतृप्रत्ययादकरणस्य प्रत्यवायहेतुत्वमवगम्यते तत्कथमकरणस्य प्रत्यवायानुत्पादकत्वमिति चेन्न,-"लक्षणहेत्वोः क्रियायाः" [३ अ० २ पा० १२६ सू०] इति पाणिनिना शतुर्लक्षणार्थेऽपि विधानात्। अत एव नित्याद्यनुष्ठानकाले निद्राऽऽलस्यादिपरवशं नरमालोक्य शिष्टैर्लक्ष्यते यदि अस्य यथावन्नित्यनैमित्तिकानुष्ठानमभविष्यत् तदा सञ्चितदुरितक्षयोऽभविष्यन्न चायं विहितमकार्षीत् अतः प्रत्यवायी भविष्यतीति। तथा च "विचिकित्सन् श्रोत्रियः" इतिवत् शतृप्रत्ययस्यान्यथाप्युपपत्तेर्न तद्बलादभावस्य हेतुत्वाशङ्का युक्ता। तदुक्तम्,—"नित्यानामक्रिया यस्माल्लक्षयित्वैव सत्वरा। प्रत्यवायक्रियां तस्माल्लक्षणार्थे शता भवेत्॥" इति [सुरेश्वरकृत तैत्ति० भाष्य वा० १।२१]।

ननु हेत्वर्थेऽपि शतुर्विधानस्य तुल्यत्वे कथं लक्षणार्थावगम इति चेत् अभावात् भावोत्पत्तेरनुपपत्तेरिति वदामः। भावरूपस्य हि कार्य्यस्य भावरूपं कारणमिति प्रत्यक्षादिभिरवधारितं, तेन शतृप्रत्ययादभावस्य भावहेतुताभ्युपगमो विरुध्यते। नन्वेवं सति कथं तवाप्यकरणस्य प्रत्यवायलक्षकत्वसिद्धिरिति चेन्नैष दोषः, नास्माभिरकरणस्य स्वरूपेण प्रत्यवायलक्षकत्वमिष्यते, किन्तु तज्ज्ञानस्य। न च तस्यैव प्रत्यवायजनकत्वमपीति वाच्यं, नित्याकरणाज्ञाने प्रत्यवायाभावप्रसङ्गात्।

ननु कथं तर्हि भाट्टैरनुपलब्धेरभावप्रमितिहेतुत्वमिष्यते तार्किकैश्च प्रतिबन्धकाभावस्य तत्तत् प्रागभावस्य च कारणत्वमिष्यत इति चेत् भ्रान्त्येति ब्रूमः। तथाहि न तावत् योग्यानुपलब्धेः स्वरूपसत्तामात्रेण अभावप्रमितिहेतुता युक्ता, तथा सत्यज्ञानकारणत्वेनाभावज्ञानस्य प्रत्यक्षत्वाभावप्रसङ्गात् ज्ञाताया एवानुपलब्धेरभावप्रमाहेतुत्वे तज्ज्ञानस्यैव भावरूपस्याभावज्ञानकारणता बलादायास्यतीति। प्रतिबन्धकाभावः कारणमिति पक्षे, स किं दृष्टकारणकलापकुक्षौ निक्षिप्तः, किं वा अदृष्टकारणकलापकुक्षौ? आद्ये दाहादिकार्य्यार्थिनः काष्ठादिसमवधानाधिगम इव प्रतिबन्धकाभावसमवधानाधिगमे सत्येव वह्निप्रज्वलनादौ प्रवृत्तिः स्यान्न च तथा प्रवर्त्त-

नैमित्तिकानि,——पुत्रजन्माद्यनुबन्धीनि जातेष्ट्यादीनि ॥ १० ॥

स्मानो दृश्यते; अन्यथा सत्यपि प्रतिबन्धकसमवधाने तदभावनिश्चयेन प्रवर्त्तमानस्य कदाचित्कार्य्यानुदयो न भवेत्। ननु सति प्रतियोगिनि तदभावनिश्चयो भ्रम इति चेत् तर्हि प्रतिबन्धकस्य अयोग्यत्वेन तदभावोऽप्ययोग्य एवेति न तस्य दृष्टकारणकलापकुक्षिनिक्षेपः। नापि द्वितीयः। अस्मदाद्यप्रत्यक्षाणामीश्वरतज्ज्ञानेच्छाप्रयत्नप्रागदृष्टानां देशकालयोश्च सूर्य्यादिग्रहचारक्रियायाश्च भावरूपतया प्रतिबन्धकाभावत्वायोगात् तदतिरिक्तस्य कस्यचित् सर्वकार्य्यसाधारणकारणस्य कल्पकाभावात्। किञ्च, सत्यपि प्रतिबन्धके उत्तेजकसमवधाने कार्य्यदर्शनान्न प्रतिबन्धकाभावस्य कारणता; उत्तेजकाभावविशिष्टप्रतिबन्धकाभावस्य कारणत्वे तादृक्प्रतिबन्धकाज्ञाने तदभावाग्रहान्न तस्य कारणतासिद्धिः। न च अनन्यथासिद्धनियतपूर्व्ववर्त्तित्वमपि प्रतिबन्धकाभावस्य, तदन्वयव्यतिरेकयोर्विरोधिसंसर्गाभावविषयतयाऽन्यथासिद्धत्वात्। तर्हि विरोधिसंसर्गाभावत्वेनैव कारणतेति चेत् न, सत्येव उत्पत्तिहेतुकलापसमवधाने स्थितिहेतुसमवधाने वा उत्पत्तेः स्थितेर्वा विघटकभावस्य विरोधित्वप्रसिद्धेर्न तदभावस्य सामग्र्यन्तर्भावो विरोधिसंसर्गाभावस्य तत्प्रवेशे तत्प्रतियोगिनो विरोधित्वसिद्धिः। तस्मिंश्च सति तत्संसर्गाभावस्य सामग्रीप्रवेश इत्यन्योन्याश्रयस्य दुरुद्धारत्वात्, इत्यलमतिकर्दमेन। प्रागभावस्यापि नियतप्राक्कालवर्त्तित्वेन कारणत्वेऽभावविशेषणस्य कालस्यात्माश्रयताप्रसङ्गः। न च प्रागभावत्वेनैव कारणत्वं, तावन्मात्रे कारणलक्षणाभावात्। किञ्च, कारणत्वं नाम धर्मो भावात्मक उताभावात्मकः; उभयथाऽपि न अभावनिष्ठत्वं तस्य सम्भवति, विरोधिनोर्भावाभावयोराधाराधेयभावानुपपत्तेः, अभावस्य निर्विशेषत्वात् निरतिशयत्वाच्च। तस्मान्नाभावाद्भावोत्पत्तौ दृष्टान्तः। तन्तुनाशात् पटनाश इत्यपि स्वप्रक्रियामात्रमित्यास्तां विस्तरः। अस्तु वा क्वचिदभावस्यापि कारणत्वं तथापि न प्रत्यवायस्य अकरणहेतुत्वं प्रत्यवायशब्दवाच्यस्य पापादृष्टस्य तज्जन्यागामिदुःखस्य वा निषिद्धक्रियाजन्यत्वात् "पापकारी पापी भवति" [ वृह० ४ अ० ४ ब्रा० ५ मन्त्रः ] इति "अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन्" [ छान्दो० ५ अ० १० खण्ड० ७ मन्त्रः ] इति च श्रुतेः। तस्मादकरणे प्रत्यवायसाधनानि प्रत्यवायज्ञापकानि नित्यानीति व्याख्यानं सुव्याख्यानमिति। सन्ध्यावन्दनादीनि इत्यादिपदात् पञ्चमहायज्ञादिग्रहः ॥ ९ ॥ द्वि०।

निमित्तमात्रमासाद्य अवश्यकर्त्तव्यतया विहितानि नैमित्तिकानि। एतदाह,

प्रायश्चित्तानि,—पापक्षयमात्रसाधनानि चान्द्रायणादीनि ॥ ११ ॥

उपासनानि,—सगुणब्रह्मविषयकमानसव्यापाररूपाणि शाण्डिल्यविद्यादीनि ॥ १२ ॥

एतेषां नित्यादीनां बुद्धिशुद्धिः परं प्रयोजनम् ;

---

पुत्रेति।--जातेष्टिर्नाम "वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते" [ तैत्ति० सं० २।२।५।३ ] इति विहिता। आदिपदात् "यस्याहिताग्नेरग्निर्गृहान्दहत्यग्निरग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्" [ तैत्ति० सं० २।२।२।५ ] इत्यादिनोक्तानां क्षामवत्यादीनां ग्रहः। उपरागस्नानादि च स्मार्त्तमुदाहरणीयम्। यद्यपि जातेष्टिवाक्यशेषे "यस्मिन् जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति" [तैत्ति० सं० २।२।५।४] इति पुत्रगाम्यवान्तरफलश्रवणान्न वक्ष्यमाणकर्त्तृगामिसिद्धिविधफलानुकूलं जातेष्ट्युदाहरणं, तथापि नैमित्तिकस्वरूपमात्रव्युत्पादनायोदाहरणं न दुष्यतीति द्रष्टव्यम् ॥ १० ॥ विद्व० ।

विहिताऽकरणप्रतिषिद्धसेवारूपनिमित्तविशेषानुबन्धीनि प्रायश्चित्तानि। पापक्षयमात्रोद्देशेन विहितानीति वा। आदिपदात् कृच्छ्रादिग्रहः ॥ ११ ॥ विद्व० ।

शास्त्रबोधिते सगुणे ब्रह्मणि दीर्घकालादरनैरन्तर्य्योपेतमनोवृत्तिस्थिरीकरणलक्षणानि उपासनानि। उपासनानां ज्ञानाङ्गत्वं दर्शयति, मानसव्यापाररूपाणीति। निदिध्यासनाङ्गत्वमाह सगुणेति। शाण्डिल्यविद्या नाम "सर्वं खल्विदं ब्रह्म" इत्युपक्रम्य "स क्रतुं कुर्वीत" "मनोमयः प्राणशरीरो भारूपः" इत्यादिना छान्दोग्ये विहिता [ ३अ० १४ खण्ड० १-२ मन्त्रः ]। वाजिनामग्निरहस्याख्येऽपि काण्डे "स आत्मानमुपासीत मनोमयं प्राणशरीरम्" [ शत० ब्रा० १०।६।३।२ ] इत्यादावुक्ता। बृहदारण्यके च "मनोमयोऽयं पुरुषो भाः सत्यः" [ ५ अ० ६ ब्रा० १ मन्त्रः ] इत्यादौ प्रत्यभिज्ञाता विद्या। आदिशब्दाद्दहरवैश्वानरादिविद्यान्तरग्रहः ॥ १२ ॥ विद्व० ।

इदानीमुक्तलक्षणानां नित्यादीनामीश्वरार्पणतयाऽनुष्ठीयमानानां परमफलं दर्शयति, एतेषामिति। आदिपदान्नैमित्तिकप्रायश्चित्तयोर्ग्रहः। नित्यादीनामुपात्तदुरितक्षयद्वारा बुद्धिशुद्धिहेतुत्वमिति द्रष्टव्यं निर्गतनिखिलकल्मषतयेत्युक्तत्वात्। "नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्" इत्यादिस्मृतेः "धर्मेण पापमपनुदति"

उपासनानान्तु चित्तैकाग्रग्रम्। "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन" [ वृह० ४ अ० ४ ब्रा० २२ मन्त्रः ] इत्यादिश्रुतेः, "तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते" [ मनु० १२अ० १०४ श्लोकः ] इत्यादि स्मृतेश्च ॥ १३ ॥

---

इति श्रुतेश्च। चित्तशुद्धेः परमप्रयोजनत्वं परम्परया मोक्षसाधनत्वात्, तथा च स्मृतिः,—"स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः। स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु" ॥ इत्युपक्रम्य "असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः। नैष्कर्म्यसिद्धिं परमां सन्न्यासेनाधिगच्छति ॥" [ भगवद्गीता १८ अ० ४५-४९ श्लोकौ ]। इति। तदुक्तं नैष्कर्म्यसिद्धावपि—"नित्यकर्म्मानुष्ठानात् धर्मोत्पत्तिः, धर्मोत्पत्तेः पापहानिः, ततश्चित्तशुद्धिः, ततः संसारात्मयाथात्म्यावबोधः, ततो वैराग्यं, ततो मुमुक्षुत्वं, ततः तदुपायपर्य्येषणं, ततः सर्वकर्म्मसन्न्यासः, ततो योगाभ्यासः, ततश्चित्तस्य प्रत्यक्प्रवणता, ततः तत्त्वमस्यादिवाक्यार्थपरिज्ञानं, ततोऽविद्योच्छेदः, ततः स्वात्मन्यवस्थानम्" इति। उपासनानान्त्विति।—तुशब्दः कर्म्मभ्य उपासनाया वैशिष्ट्यद्योतनार्थः। तस्य नित्याद्यनुष्ठानक्षपितकल्मषतया विशुद्धस्य चित्तस्य शास्त्रप्रकाशिते ध्येये ज्ञेये वा विषये ऐकाग्र्यं निश्चलत्वमित्यर्थः, सूक्ष्मार्थावधारणसमर्थत्वमिति यावत्। पूर्वोक्तप्रकारेणानुष्ठीयमानानां नित्यादीनामुपात्तदुरितक्षयद्वारा शुद्ध्यादिपरम्परया ज्ञानहेतुत्वे प्रमाणमाह, विविदिषन्तीति। आदिपदात् "तपसाऽनाशकेन" [ वृह० ४ अ० ४ ब्रा० २२ मन्त्रः ] इति वाक्यशेषग्रहः। विविदिषन्तीति विविदिषासम्बन्धे विधिप्रत्ययोऽनुसन्धेयोऽपूर्व्वत्वात्; न हि यज्ञादीनां विविदिषासंयोगः पूर्वं प्राप्तो येनानुवादत्वं वाक्यस्य कल्पेत। ननु यज्ञादीनां यावज्जीववाक्येन अवश्यकर्त्तव्यतया प्राप्तानां विविदिषार्थत्वे नित्यानित्यसंयोगः प्रसज्येत, यदि च विविदिषार्थं यज्ञाद्यनुष्ठानमपरमिष्येत, ततः संसारव्याविवृत्सूनां द्विरनुष्ठानं स्यादिति चेन्न, खादिरादिवत् संयोगपृथक्त्वोपपत्तेः। न च तर्हि तेनैव न्यायेन कर्मणां मोक्षार्थत्वमपीति शङ्कनीयं, ज्ञानकर्मसमुच्चयनिराकरणात्। तथा च न्यायः "अत एव चाग्नीन्धनाद्यनपेक्षा" [ ब्रह्म० सू० ३ अ० ४ पा० २५ सू० ] इति। कर्मणां ज्ञानं प्रति आरादुपकारकत्वं तु स्यात् "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" [ ब्रह्म० सू० ३ अ० ४ पा० २६ सू० ] इति न्यायात्। उक्तं च भाष्यकृद्भिः,—"विविदिषासंयोगात्तु बाह्यानीतराणि यज्ञादीनि" [ शारी० भा० ३ अ० ४ पा० २७ सू० ] इति। तत्रैव

नित्यनैमित्तिकयोरुपासनानाञ्च अवान्तरफलं पितृलोकसत्यलोकप्राप्तिः "कर्म्मणा पितृलोको विद्यया देवलोकः" [ बृह० १ अध्या० ५ ब्रा० १६ मन्त्रः ] इत्यादिश्रुतेः॥ १४॥

स्मृतिं संवादयति, तपसेति। आदिपदात् "कषायपक्तिः कर्माणि" इत्यादिस्मृत्यन्तर ग्रहः॥ १३॥ विद्व०।

ननु नित्यादेः सत्त्वशुद्धितदैकाग्र्यफलकत्वे "कर्मणा पितृलोको विद्यया देवलोकः" [बृह० १अ०५ब्रा०१६मन्त्रः] इति "सर्वे एते पुण्यलोका भवन्ति" [छान्दो० २अ०२३ख० १मन्त्रः] इति च श्रुतिर्नित्यादीनां पितृलोकादिफलपरा पीड्येतेत्यत आह,नित्यनैमित्तिकयोः इति। अत्र प्रायश्चित्ताग्रहणं तस्यावान्तरफलाभावात् ; न ह्युपात्तदुरितक्षयमन्तरेण तस्य किञ्चित्फलं श्रुतमस्ति ; अन्ययोस्तु तच्छ्रूयते इति विशेषः। नित्यनैमित्तिकयोः पितृलोकप्राप्तिरवान्तरफलम् उपासनानां सत्यलोकप्राप्तिरिति विवेकः। "तत् यथा आम्रे फलार्थे निर्मिते छायागन्धावित्यनूत्पद्येते" [ आप० धर्मसूत्र० १।७।२०।३ ] इति स्मृत्युक्तछायागन्धवत् पितृलोकादिफलस्यावान्तरत्वमानुषङ्गिकम्। तदुद्देशेन नित्यादेरविधानाद्विविदिषासंयोगस्य च विधानात् शुद्धेरेव महाफलत्वमिति भावः।

ननु पितृलोकस्य कथं नित्यादिसाध्यत्वं श्राद्धादिकर्म्मसाध्यत्वात् तस्य, देवलोकस्य च "अष्टाशीतिसहस्राणां मुनीनामूर्द्ध्वरेतसाम्। उदक्पन्थानमर्य्यम्णः……"॥ [विष्णु० पु० २अ० ८अ० ८६ श्लोकः ] इत्यादिस्मृतेर्नैष्ठिकाद्यूर्द्ध्वरेताश्रमधर्म्ममात्रसाध्यत्वावगमात् कुतो विद्याफलत्वमिति चेत् अत्र पृच्छामः,—किं श्राद्धादि नित्यनैमित्तिकरूपं कर्म्म काम्यं वेति। आद्ये—कथं न नित्यादेः पितृलोकः फलम् ? द्वितीये तु अस्य विध्युद्देशफलेनैव निराकाङ्क्षत्वात् पितृलोकफलसम्बन्धाभावात्, नापि विना विद्यामूर्द्ध्वरेताश्रमधर्म्ममात्रेणोत्तरमार्गेगमनं सम्भवति।—"विद्यया तदारोहन्ति यत्र कामाः परागताः। न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः"॥ [ शत० ब्रा० १०।५।४।१६ ] इति श्रुतौ विद्याविरहिणामुत्तरमार्गनिषेधात्। निर्णीतं चैतदाचार्य्यैर्गुणोपसंहारपादे—"अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम्" [ब्रह्म० सू० ३अ० ३पा० ३१सू०] इत्यत्राधिकरणे स्मृतिर्नापुनरावृत्तिमूर्द्ध्वरेतसामाचष्टे, किन्तु गमनमात्रम्। श्रुतौ तु देवलोकशब्दितब्रह्मलोकगतानां पुनरावृत्त्यभावोऽवगम्यते। "एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्त्तन्ते" [ छान्दो० ४अ० १५ख० ६मन्त्रः ] इति "तेषामिह न पुनरावृत्तिः" [ बृह०

६।१।१८ ] इति च। यत् पुनरवेमामिहेति च विशेषणात् कल्पान्तरे आवृत्तिरवगम्यते तद्विद्यारहितानामनावृत्तिस्तु विद्यावतां क्रममुक्त्यानानादिति रहस्यम्। नन्वेवं सति छान्दोग्यभाष्यविरोधः, तत्र हि महता संरम्भेण "ये चेमेऽरण्ये श्रद्धातप इत्युपासते" [ ५ प्रपा० १० खण्ड० १ मन्त्रः ] इति पञ्चाग्निविद्यागतवाक्यव्याख्यानावसरे गृहस्थानां विद्यारहितानामनृतपैशुन्यमायादम्भाऽब्रह्मचर्य्यादिभिरपूतत्वात् न स्वधर्म्मनिष्ठामात्रेणोत्तरमार्गगतिरस्ति। इतरेषां नैष्ठिकवानप्रस्थमुख्यसन्न्यासिनां तु तद्विपरीतत्वात्पूततया स्वाश्रमधर्म्मनिष्ठामात्रेणोत्तरमार्गगतिरपुनरावृत्तिलक्षणा भवेदित्याचार्य्यैरेव निरूपितम्। "न तत्र दक्षिणा" इत्यादिश्रुतिः परममुक्त्यपेक्षेति च व्याख्यातम्। तत्कुत एवं विभागवचनमिति चेत् सत्यम्। ऊर्द्ध्वरेतसामुत्तरमार्गेण ब्रह्मलोकगमनं विद्यां विनापीत्येतावन्मात्रं तत्रोक्तं न पुनरात्यन्तिक्यपुनरावृत्तिस्तत्र विवक्षिता ;—"आभूतसम्प्लवं स्थानममृतत्वं हि भाष्यते"। [ विष्णु० पु० २अं० ८अ० ९०श्लोकः ] इत्यापेक्षिकामृतत्ववचनादाहरणात्। गुणोपसंहारे च "तस्मादिह श्रद्धातपोभ्यां विद्यान्तरोपलक्षणं वाजसनेयिनस्तु पञ्चाग्निविद्याधिकारेऽधीयते [ ब्रह्म० सू० भा० ३।३।३१ ] "ते य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते" [ वृह० ६अ०२ब्रा०१५मन्त्रः ] इत्युदाहृत्य तत्र श्रद्धालवो ये सत्यं ब्रह्मोपासत इति व्याख्येयं सत्यशब्दस्य ब्रह्मण्यसकृत् प्रयुक्तत्वात्" इति तैरेव व्याख्यातत्वात्। याज्ञवल्क्यश्चाह—"सप्तर्षिनागवीथ्यन्तर्देवलोकसमाश्रिताः। तावन्त एव मुनयः सर्वारम्भविवर्जिताः॥ तपसा ब्रह्मचर्य्येण सङ्गत्यागेन मेधया। तत्र गत्वाऽवतिष्ठन्ते यावदाभूतसम्प्लवम्॥" इति। [ याज्ञ० स्मृतौ ३अ० १८७·१८८श्लोकौ ] तस्मादात्यन्तिक्यपुनरावृत्तिर्विद्यावतामेवेति युक्तं क्रममुक्तिहेतुत्वाद्विद्यायाः। न च तर्हि मुक्तेरेव विद्यापरमप्रयोजनत्वाच्चित्तैकाग्र्यस्य तदयुक्तमिति वाच्यं, सगुणब्रह्मविदस्तथात्वेऽपि निर्गुणब्रह्मविद्याधिकारिणः चित्तैकाग्रताया एव परमप्रयोजनत्वात्। तस्यापि साक्षात्कारोदयात् प्रागेव प्रमीतस्य ब्रह्मलोकगमनोपपत्तेः।—"प्राप्य पुण्यकृताँल्लोकानुषित्वा शाश्वतीः समाः" [ गीता ६ अ० ४१ श्लोकः ] इत्यादिस्मृतेश्च। सगुणब्रह्मविदोऽपि ब्रह्मलोकगतस्य तत्रत्यं भोगं विद्यावान्तरफलं भुक्तवतः तत्रोत्पन्नचित्तैकाग्र्यद्वारा स्वयम्भातवेदान्तवाक्यार्थज्ञानादेव मुक्तिरिति नियमात्। भवत्येव चित्तैकाग्र्योपासनायाः परमप्रयोजनमिति न किञ्चित् दुष्यति। तस्मात् "सर्व्व एते पुण्यलोका भवन्ति" [ छान्दो० २ अ० २३ खण्ड० १ मन्त्रः ] इति श्रुतेर्नित्यनैमित्तिकयोः फलवत्त्वस्य वाचनिकत्वात् तथात्वेऽप्युक्तलक्षणभेदेन काम्यवैषम्यात् फलविशेषस्य चाश्रुतत्वात् पितृलोकस्य च फलात्मनः कर्म्मविशेषाकाङ्क्षितत्वान्नष्टाश्वदग्धरथन्यायेन "कर्म्मणा पितृलोकः" [ वृह० १ अ० ५ ब्रा० १६ मन्त्रः ] इति श्रुतिरुप-

साधनानि,—नित्यानित्यवस्तुविवेक-इहामुत्र-फलभोगविराग-शमदमादिसम्पत्ति-मुमुक्षुत्वानि॥ १५ ॥

नित्यानित्यवस्तुविवेकस्तावत्—ब्रह्मैव नित्यं वस्तु, ततोऽन्यदखिलमनित्यमिति विवेचनम्॥१६॥

---

पद्यते। काम्यप्रायश्चित्तयोः फलविशेषोद्देशेन पापक्षयमात्रार्थत्वेन च विधानात् फलान्तराकाङ्क्षाभावात् तथाङ्गावबद्धानामुपासनानां कर्म्मसमृद्ध्यर्थत्वादनङ्गावबद्धानामपि प्रतीकोपासनानामब्रह्मोपासनानां चाभ्युदयफलत्वात कार्य्यकारणब्रह्मोपासनानामवान्तरफलं देवलोकशब्दवाच्यब्रह्मलोक इति परिशेषात् सिद्धः, अतो युक्तं "विद्यया देवलोकः" [बृह० १अ० ५ब्रा० १६मन्त्रः] इति वचनमित्यलं प्रपञ्चेन ॥ १४ ॥ विद्व० ।

साधनसम्पन्नः प्रमाताधिकारीत्युक्तं, तत्र कानि साधनानि, कियन्तीत्यपेक्षायां तानि विभजते, साधनानीति।—विवेकमन्तरेण वैराग्यायोगात् विवेकस्य प्राथम्यं न हीदं हेयमिदमुपादेयमिति विवेचनमन्तरेण हेयाद्रागनिवृत्तिः सम्भवति। अनिवृत्तरागस्य शमाद्यभावात् शमाद्यपेक्षया विरागस्य पूर्व्वमुद्देशः। शान्त्यादिहीनस्य मुमुक्षायोगात् ततः प्रागेव शमाद्युद्देशः। एतैस्त्रिभिः साधनैः सम्पन्नस्य मुमुक्षाया अवश्यम्भावात् तस्यां च सत्यां ब्रह्मजिज्ञासायां नियमेन प्रवृत्तेर्मुमुक्षान्तान्येव साधनानीत्यभिप्रायः॥१५॥ विद्व०।

विवेकादीन्युद्देशक्रमेण लक्षयति, नित्यानित्यवस्तुविवेकस्तावदित्यादिना। नित्यत्वं नाम कालानवच्छिन्नत्व, तद्विपरीतत्वम् अनित्यत्वम्। न स्थास्यतीति लोकागमयोर्व्यवहारायोग्यं नित्यं, तद्विपरीतमनित्यमिति वा। तथा च नित्यानित्ये च ते वस्तुनी चेति नित्यानित्यवस्तुनी तयोर्विवेक इति विग्रहः। केचित्तु नित्यानित्ययोर्वस्तितुं शीलं ययोस्ते नित्यानित्यवस्तुनी नित्यत्वमनित्यत्वं च, तयोः साश्रययोर्विवेको नित्यानित्यवस्तुविवेक इत्याहुः। स च आपाततोऽधिगतवेदार्थस्यानुमानकुशलस्य ब्रह्मैव नित्यं वस्तु, ततोऽन्यदखिलमचेतनमनित्यमिति विवेको भवति। तथाहि— "यस्मादर्वाक् संवत्सरोऽहोभिः परिवर्त्तते तद्देवाः ज्योतिषां ज्योतिः" [बृह० ४ अ० ४ ब्रा० १६ मन्त्रः] "नित्यं विभुं सर्व्वगतं सुसूक्ष्मम्" [मुण्ड० १ मुण्ड० १ खण्ड० ६ मन्त्रः] "आकाशवत् सर्व्वगतश्च नित्यः" [छान्दो० ६ अ० ३ खण्ड० २यमन्त्रभाष्ये काठकस्योल्लेखः] "अजो नित्यः शाश्वतः" [कठ० १ अ० २ वल्ली०

ऐहिकानां स्रक्चन्दनवनितादिविषयभोगाणां कर्म्मजन्यतया अनित्यत्ववत् आमुष्मिकाणामपि अमृतादिविषयभोगाणामनित्यतया तेभ्यो नितरां विरतिः, इहामुत्रफलभोगविरागः॥ १७॥

१८ मन्त्रः] "सत्यं ज्ञानमनन्तं ब्रह्म" [तैत्ति० २ वल्लो० १ अनु०] "ब्रह्म रातेर्दातुः परायणम्" [बृह० ३ अ० ९ ब्रा० २८ मन्त्रः] "यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" [छान्दो० ७ अ० २४ खण्ड० १ मन्त्रः] "यो वै भूमा तदमृतम्" [छान्दो० ७ अ० २४ खण्ड० १ मन्त्रः] इत्यादि श्रुतिभ्यो ब्रह्मणि नित्यत्वं विशुद्धसत्त्वस्य पुंसः प्रतिभाति। तथा "नैवेह किञ्चनाग्र आसीन् मृत्युनैवेदमावृतमासीत्" [बृह० १ अ० २ ब्रा० १ मन्त्रः] "आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत्" [ऐत० ब्रा० १।१] "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" [छान्दो० ६अ० २खण्ड० १मन्त्रः] "नेति नेति" [बृह० २ अ० ३ ब्रा० ६ मन्त्रः] "नेह नानास्ति किञ्चन" [बृह० ४अ० ४ब्रा० १९मन्त्रः] "यत्रान्यत् पश्यति अन्यच्छृणोति अन्यद्विजानाति तदल्पम्" [छान्दो० ७अ० २४खण्ड० १ मन्त्रः] "अथ यदल्पं तन्मर्त्त्यम्" [छान्दो० ७ अ० २४ खण्ड० १ मन्त्रः] इत्यादि श्रुतिवचनेभ्यो ब्रह्मणोऽन्यत्वं भेदप्रपञ्चेऽनित्यत्वं च तस्यैव पुंसः प्रतिभाति। तथानुमानमपि "विमतोऽचेतनवर्गोऽनित्यो विभक्तत्वात् घटपटस्तम्भादिवत्" इति। अनेन हि विभक्तस्यानित्यत्वेऽवगते तस्मिन्ननुगतप्रकाशात्मकस्य ब्रह्मणोऽविभक्तस्य नित्यत्वमप्यर्थादवगच्छति। आकाशादेरुत्पत्तिमत्त्वसाधनेनानित्यत्वमुत्तरत्र वर्णयिष्यामः। न चैवं श्रुत्यनुमानाभ्यां विवेके सति ब्रह्मणो विज्ञातत्वादलं विचारेणेति वाच्यम् आपाततो नित्यं वस्तु ब्रह्मेत्यवगमेऽपि तस्याद्वितीयत्वप्रत्यगभिन्नत्वादेरनिर्धारणाज्जिज्ञासाया अनिवृत्तेरित्यास्तां विस्तरः॥ १६॥ विद्व०।

ऐहिकानामिति।—इह लोके भवा इति ऐहिकाः प्रतिपन्नशरीरसम्बन्धिनः स्रक्चन्दनवनितागृहक्षेत्रपशुभृत्यादिविषयजन्यसुखरूपाः भोगाः कृषिसेवाप्रतिग्रहादिकर्म्मजन्या अनित्या यथा दृष्टा एवमामुष्मिका अप्यमृतादिविषयसेवाजन्यानन्दा यागादिकर्म्मजन्यत्वादनित्या भवितुमर्हन्तीति निश्चित्य, तेभ्यो नितरां विषमिश्रितान्नकर्दितान्नवज्जुगुप्सेहामुत्रार्थफलभोगविराग इत्यर्थः। अयं भावः। सुखं मे निरतिशयं भूयाद्दुःखं मे माभूदणमात्रमपीत्यखिलप्राणिनामस्त्यभिनिवेशः। ते चैवमभिनिविष्टाः पुरुष-

**शमदमादयस्तु—शम-दम-उपरति-तितिक्षा-समाधान-श्रद्धाख्याः ॥ १८ ॥**

**शमस्तावत् — श्रवणादिव्यतिरिक्तविषयेभ्यो मनसो निग्रहः ॥ १९ ॥**

तत्र शमं लक्षयति, शमस्तावदिति ।—यथा तीव्रायां बुभुक्षायां जातायां भोजनादन्यो व्यापारो मनसे न रोचते,

कारावलम्बनेन सर्वोत्साहं यतन्तोऽपि न लभन्ते सुखमात्यन्तिकं दुःखाभावञ्च, कथम् ? केचित् समुद्रयानराजप्रीणनाद्यतिकष्टमनुभूय फलकाले स्वयं नश्यन्ति । केचित् प्राप्तफला अपि व्याध्याद्युपद्रुताः सन्तो भोगं न लभन्ते । केचित्तु प्रतिपन्नभोगा अपि भोग्यभार्य्यापुत्रादिविनाशाद्वा तद्विसंवादाद्वा अन्यैर्वा सह स्पर्द्धाऽसूयादिभिः सञ्चितभोग्यजातस्य क्षयभयेनानावृष्ट्यादिचिन्तासन्तापादिभिश्च क्षणमपि सुखमलभमानाः कष्टा दरिद्राः काणकुब्जक्लीबबधिरादयो बुभुक्षापिपासार्दिता बहुलमुपलभ्यन्ते । एवं दुःखबहुले संसारे सुखलवमात्रमनुभवन्नपि कृपणवद्विशुद्धचित्तो न सज्जते, किन्तु विरज्यत एवेति । नन्वस्त्वेवमैहिकं सुखमनित्यत्वादिदोषदुष्टत्वाद्विरागास्पदं तथापि न पारलौकिकादपि विरक्तिरुपपद्यते क्षयिष्णुत्वानुमानस्य "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" [ शत० ब्रा० २ । ६ । ३ । १ ] इति श्रुतिबाधितविषयस्यानुत्थानादिति चेन्नैवम्, "तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते" [ छान्दो० ८अ० १खण्ड० ६मन्त्रः ] इति श्रुत्या वस्तुबलावलम्बनेन प्रवृत्तयाऽनन्यपरया सापेक्षाक्षय्यफलविषयिकायाः प्राशस्त्यलक्षणया विध्येकवाक्यत्वेनान्यपरायाः तस्या एव बाधितत्वात् । न हि जन्यं नित्यं भावरूपं दृष्टम् अतः ऐहिकभोगवदेव आब्रह्मस्तम्बपर्य्यन्तेषु भोगेषु वैराग्यमुपपद्यत इति । तदुक्तं भगवता व्यासेन ।—"यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम् । तृष्णाक्षयसुखस्यैते नार्हतः षोड़शीं कलाम् ॥" [ महा० १२।११७ ] इति ॥ १७ ॥ विद्व० ।

शमादीन् विभजते, शमादय इति ।—मनसो बहिःप्रवृत्तौ बाह्येन्द्रियाणां द्वारत्वात् तन्निरोधमन्तरेण मनोनिग्रहाशक्तेर्दमानन्तरं शमो द्रष्टव्यः पाठक्रमादर्थक्रमस्य बलीयस्त्वादग्निहोत्रयवागूपाकवत् ॥ १८ ॥ विद्व० ।

मनसोऽन्तःकरणस्य निग्रहो विषयेभ्यो बलादाकर्षणं शम इत्येतावत्युक्ते श्रवणादिविषयेभ्योऽपि निग्रहे प्राप्ते ततो निग्रहस्य ज्ञानानुकूलत्वाभावादानर्थक्यमित्याशङ्क्य

दमः,—वाह्यविषयेन्द्रियाणां तद्व्यतिरिक्त-विषयेभ्यो निवर्त्तनम् ॥ २० ॥

निवर्त्तितानामेतेषां तद्व्यतिरिक्तविषयेभ्यः उपरमणम्, उपरतिः; अथवा विहितानां कर्म्मणां विधिना परित्यागः ॥ २१ ॥

भोजने विलम्बञ्च न सहते, तथा स्रक्चन्दनादिविषयेष्वत्यन्त-मरुचिः तत्त्वज्ञानसाधनेषु श्रवणमननादिषु अत्यन्तमभिरुचि-र्जायते। तदा पूर्ववासनाबलात् श्रवणादिसाधनेभ्य उड्डीय स्रक्चन्दनादिविषयेषु गम्यमानं मनः येनान्तःकरणवृत्ति-विशेषेण निगृह्यते स वृत्तिविशेषः शम इत्यर्थः ॥ १९ ॥ सु० ।

इदानीं दमस्य लक्षणमाह, दम इत्यादि।—ज्ञानसाधन-श्रवणादिसाधनेभ्यो विलक्षणेषु शब्दादिविषयेषु प्रवर्त्तमानानि श्रोत्रादीनि वाह्येन्द्रियाणि येन वृत्तिविशेषेण निवर्त्त्यन्ते, स दम इत्यर्थः ॥ २० ॥ सु० ।

इदानीमुपरतेर्लक्षणमाह, निवर्त्तितानामिति।—निगृ-हीतानामेतेषां वाह्येन्द्रियाणां श्रवणादिसाधनव्यतिरिक्तेषु शब्दादिविषयेषु यथा तानीन्द्रियाणि सर्वथा न गच्छन्ति, तथा तेषां निग्रहो येन वृत्तिविशेषेण क्रियते सा उपरतिरित्यर्थः।

निग्रहं विशिनष्टि, श्रवणादिति। मननादिसङ्ग्रहार्थमादिपदम्। एवमुत्तरत्रापि द्रष्टव्यम् ॥ १९ ॥ विद्व० ।

तद्व्यतिरिक्तेत्यत्र श्रवणादिस्तच्छब्दार्थः ॥ २० ॥ विद्व० ।

निवर्त्तितानां तेषां वाह्यान्तरिन्द्रियाणां तद्व्यतिरिक्तविषयेभ्यः श्रवणादिव्यतिरिक्त-विषयेभ्यः। उपरमणं पुनर्विषयप्रवृत्त्यनुत्साहकरणेन स्थिरीकरणम् उपरतिरित्यर्थः। ननु शमदमयोर्लक्षणाभ्यामिदमुपरतिलक्षणं सङ्कीर्णं प्रतिभाति वहिःप्रवृत्तेन्द्रियव्यापार-निरोधात्मकस्य लक्षणार्थस्य तुल्यत्वादित्यपरितोषात् प्रकारान्तरेण उपरतिं लक्षयति,

तितिक्षा—शीतोष्णादिद्वन्द्वसहिष्णुता ॥२२॥

उपरतेर्लक्षणान्तरमाह, अथवेति।—विहितानां नित्यादिकर्म्मणां, विधिना चतुर्थाश्रमस्वीकारकर्म्मणा, परित्यागः; नाहं कर्त्तेत्यवस्थानम् उपरतिरित्यर्थः ॥ २१ ॥ सु०।

तितिक्षाया लक्षणमाह, तितिक्षेति।—शरीरधर्मस्य शीतो-

अथवेति। विहितानामवश्यकर्त्तव्यतया चोदितानां सन्ध्यावन्दनाग्निहोत्रादीनां कर्म्मणां विधिना "तद्धैके प्राजापत्यामेवेष्टिं कुर्व्वन्ति" [ जावा उप० ४ मन्त्रः ]—"प्राजापत्यां निरुप्येष्टिं सर्व्ववेदसदक्षिणाम्। आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेत् गृहात्" ॥ [ मनु० ६ अ० ३८ श्लोकः ] इत्यादि श्रुतिस्मृत्युक्तमार्गेण परित्यागः परिव्रजनं सन्न्यास उपरतिरित्यर्थः। शमादिवत् सन्न्यासोऽप्यात्मज्ञानान्तरङ्गत्वादवश्यं मुमुक्षुणाऽनुष्ठेयः। तथा च श्रुतयः,—"न कर्म्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" ॥ "वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः ॥" [ मुण्ड० ३ मुण्ड० २ खण्ड० ६मन्त्रः]। "एतमेव प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्ति" [ वृह० ४अ० ४ब्रा २२मन्त्रः ] "पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्य्यं चरन्ति" [ वृह० ४अ० ४ब्रा० २२मन्त्रः ] "तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्" इत्याद्याः। स्मृतयश्च— नैष्कर्म्यसिद्धिं परमां सन्न्यासेनाधिगच्छति" [ गीता १८ अ० ४९ श्लोकः ] "त्वम्पदार्थविचाराय सन्न्यासः सर्व्वकर्म्मणाम्" ॥ [ उपदेशसाहस्री १८।२२२ ] "अर्थस्य मूलं निकृतिः क्षमा च कामस्य रूपञ्च वपुर्वयश्च। धर्म्मस्य यागादि दया दमश्च मोक्षस्य सर्वोपरमः क्रियाभ्यः" ॥ [ संक्षेपशारीरकम् ३। ३६६ ] "प्रवृत्तिलक्षणो योगो ज्ञानं सन्न्यासलक्षणम्। तस्मात् ज्ञानं पुरस्कृत्य सन्न्यसेदिह बुद्धिमान् ॥" [ महा० १४।४३ ] इत्यादयः।

न्यायश्च पुरुषस्योद्देश्यसिद्धये यदुपयुक्तमविरोधि च तदुपादेयं, विपरीतं, तु हेयमिति। तदिह ब्रह्मात्मजिज्ञासूनां वेदान्तविचारे क्रियमाणे न कर्म्मणामुपयोगो विनापि कर्म्म तदनुष्ठानसिद्धेः। नाप्यविरोधः, कर्म्मविक्षिप्तचित्तस्य वेदान्तार्थनिर्णयाशक्तेः कर्म्मणां विचारविरोधित्वात्। न हि अपेतब्रह्मक्षत्रादिकर्त्तृभोक्तृब्रह्माहमस्मीत्यात्मनि विचार्य्यमाणे ब्राह्मणाद्यध्यासविशिष्टात्मप्रतिपत्त्यधीनेषु कर्मस्वधिकारो न विरुध्यते येनात्मजिज्ञासुना कर्माणि न त्यक्तव्यानि स्युः। तस्मात् श्रुतिस्मृतिन्यायैरात्मज्ञानाङ्गतया यः सन्न्यासः कर्त्तव्यतया प्राप्तः स उपरतिरिति भावः ॥ २१ ॥ विद्व०।

शीतोष्णादीत्यादिपदात् मानापमानलाभालाभशोकहर्षादिग्रहः ॥ २२ ॥ विद्व०।

निगृहीतस्य मनसः श्रवणादौ तदनुगुणविषये च समाधिः समाधानम् ॥ २३ ॥

गुरुवेदान्तादिवाक्येषु विश्वासः श्रद्धा ॥ २४ ॥

मुमुक्षुत्वं—मोक्षेच्छा ॥ २५ ॥

---

णादेः तज्जन्यसुखदुःखादेश्च शरीरेण त्यक्तुमशक्यत्वात् स्वप्रकाशचिद्रूपे स्वात्मनि च शीतोष्णादेरत्यन्ताभावादिति विवेकदीपेन मिथ्याभूतस्य शीतोष्णादेर्द्वन्द्वस्य यत् सहनं सा तितिक्षेत्यर्थः ॥ २२ ॥ सु० ।

इदानीं समाधानं लक्षयति, निगृहीतस्येति।—शब्दादिविषयेभ्यो निगृहीतस्याऽन्तःकरणस्य श्रवणादौ, तदनुगुणेषु तदुपकारकेषु अमानित्वादिसाधनविषयेषु, समाधिर्नैरन्तर्य्येण तच्चिन्तनं, समाधानमित्यर्थः ॥ २३ ॥ सु० ।

श्रद्धादयः स्पष्टार्थाः ॥ २४ ॥ सु० ।

---

श्रवणादावित्यत्र आदिशब्दो मननादिसङ्ग्रहार्थः। तदनुगुणेत्यत्र गुरुशुश्रूषापुस्तकसम्पादनतद्रक्षणादिः श्रवणाद्यनुगुणो विषयो निर्दिश्यते। न पुनः सुखवासद्रव्यान्नादिसङ्ग्रहादिरपि श्रवणाद्यनुकूलत्वात् तदर्थं मठारम्भप्रतिग्रहादावपि चित्तसमाधिः कर्त्तव्य इहोपदिश्यते "दण्डमाच्छादनं कौपीनं परिग्रहेच्छेषं विसृजेत्" [ आरु० उप० १ ] इति सन्न्यासकाले त्याजितस्य दण्डकौपीनाद्यतिरिक्तस्य विना प्रतिप्रसवशास्त्रं सङ्ग्रहानुपपत्तेरित्यर्थः। समाधिः ऐकाग्र्यं तत्परत्वमिति यावत् ॥ २३ ॥ विद्व० ।

गुरुवेदान्तादौत्यादिपदात् स्मृतीतिहासपुराणानां ग्रहः। विश्वास इदमित्थमेव नान्यथेति गुर्व्वादिवाक्येषु निश्चयात्मिका बुद्धिः सा श्रद्धेत्यर्थः ॥ २४ ॥ विद्व० ।

चरमं साधनं लक्षयति, मुमुक्षुत्वमिति।—मोक्षो नाम विद्यानिरस्ताविद्यातत्कार्य्यब्रह्मात्मनावस्थानं, तद्विषयेच्छा मोक्षेच्छा तद्वत्त्वं मुमुक्षुत्वमित्यर्थः। ननु "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्त्योऽमृतो भवति...... ॥" [ बृह० ४अ० ४ब्रा० ७मन्त्रः ] इति श्रुतेः सर्व्वकामविमुक्तस्य मोक्षाधिकारात् कथमिच्छा अधिकारिविशेषणमिति चेत्, नायं दोषोऽनात्मविषयेच्छाया एव कामत्वात्

एवम्भूतः प्रमाता अधिकारी। "शान्तो दान्तः" [वृह० ४अध्या० ४ब्रा० २३ मन्त्रः] इत्यादिश्रुतेः। उक्तञ्च,—"प्रशान्तचित्ताय जितेन्द्रियाय च प्रहीण-

---

तथा च पूर्व्वोक्तसकलविशेषणविशिष्टः प्रमाता अधिकारी-त्यर्थः। अस्मिन्नर्थे श्रुतिं प्रमाणयति,—शान्त इत्यादि ॥ २५-२६ ॥ सु०।

---

तदभिप्राया श्रुतिः। मोचेच्छायास्तु आत्मविषयतया अकामत्वात् "अथाकामयमानो-योऽकामो निष्काम आप्तकाम आत्मकामः" [ वृह० ४अ० ४ब्रा० ६ मन्त्रः ] इति श्रुतेः आत्मकामस्याप्तकामत्वेनाकामत्वावगमादिति। विद्याऽधिकारिणः शमादिसाधनवत्त्वे श्रुतिं प्रमाणयति, शान्तो दान्त इति। "शान्तो दान्त उपरतस्तितिचुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति" [वृह० ४ अ० ४ ब्रा० २३ मन्त्रः] इति काण्वाः पठन्ति। समाहित इत्यस्य स्थाने "श्रद्धावित्तो भूत्वा" इति माध्यन्दिनाः। तदुभयपाठानुरोधेन गुणोपसंहारन्यायमाश्रित्य इह शमादयः षट् निर्द्दिष्टा इति द्रष्टव्यम्। शमादेर्विद्या-हेतुत्वं श्रीभगवानप्याह,—"योगारूढस्य तस्यैव शमः कारणमुच्यते" [ गीता ६ अ० ३ श्लोकः ] "………अशान्तस्य कुतः सुखम्" [ गीता २अ० ६६श्लोकः ] तथा "यदा संहरते चायं कूर्म्मोऽङ्गानीव सर्व्वशः। इन्द्रियाणीन्द्रियार्थेभ्यः तस्य प्रज्ञा प्रतिष्ठिता" [ गीता २अ० ५८श्लोकः ] इति। "सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज" इति [ गीता १८अ० ६६श्लोकः ] "मात्रास्पर्शास्तु कौन्तेय ! शीतोष्णसुखदुःखदाः। आगमा-पायिनोऽनित्यास्तांस्तितिचस्व भारत !" इति [ गीता २ अ० १४ श्लोकः ] "समाधाव-चला बुद्धिः…………" [ गीता २अ० ५३श्लोकः ] "मय्येव मन आधत्स्व मयि बुद्धिं निवेशय" इति [ गीता १२ अ० ८ श्लोकः ] "श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः" [ गीता ४अ० ३९ श्लोकः ] "अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति" [ गीता ४ अ० ४० श्लोकः ] इति च। मुमुक्षुत्वेऽपि—"मुमुक्षुर्वै शरणमहं प्रपद्ये" [ श्वेता० ६ अ० १८ मन्त्रः ] "ततः पदं तत्परिमार्गितव्यं यस्मिन् गता न निवर्त्तन्ति भूयः। तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी" [ गीता १५ अ० ४ श्लोकः ] इति श्रुतिस्मृती द्रष्टव्ये ॥ २५ ॥ विद्व०।

एवं विशेषणविशिष्टो वेदान्ताधिकारीति निरूपितेऽर्थेऽभियुक्तवचनमुदाहरति, "उक्तञ्च,—प्रशान्त" इति।—प्रशान्तचित्ताय शान्ताय। जितेन्द्रियाय दान्ताय।

दोषाय यथोक्तकारिणे। गुणान्वितायाऽनुगताय सर्व्वदा प्रदेयमेतत् सकलं मुमुक्षवे॥" इति [ उपदेशसाहस्री ४१६ श्लोकः ] ॥ २६ ॥

विषयः,—जीवब्रह्मैक्यं शुद्धचैतन्यं प्रमेयं, तत्रैव वेदान्तानां तात्पर्य्यात् ॥ २७ ॥

---

यथोद्देशं विषयं निरूपयति, विषय इति।—अविद्याऽध्यारोपितसर्वज्ञत्वकिञ्चिज्ज्ञत्वादिविरुद्धधर्मपरित्यागेनावशिष्टं शुद्धं चैतन्यं ज्ञेयस्वरूपमेव सर्वेषां वेदान्तवाक्यानां विषय इत्यर्थः॥ २७॥ सु०।

---

प्रहीणदोषाय नितान्तनिर्म्मलस्वान्ताय। यथोक्तकारिणे काम्यनिषिद्धवर्जनपुरःसरं नित्याद्यनुष्ठानलब्धेश्वरप्रीतये। गुणान्विताय विवेक-वैराग्य-उपरति-तितिक्षा-समाधान-युक्ताय। सर्व्वदा गुरुमनुगताय श्रद्धालवे। एवम्भूताय मुमुक्षवे एतदात्मज्ञानं सततं गुरुणा देयमिति श्लोकार्थः॥ २६॥ विद्व०।

तदेवमधिकार्य्यनुबन्धौ निरूपितः; इदानीं विषयानुबन्धं व्यपदिशति, विषय इति।—क्षीरनीरवत् परस्परविभिन्नयोः समानाभिहारस्यैक्यशब्दार्थत्वात् जीवब्रह्मणोरपि स्वरूपतो भिन्नयोरैक्यं मिश्रीभाव इति शङ्का स्यात्, सा माभूदिति व्याचष्टे, शुद्धचैतन्यमिति।—चैतन्यस्य शुद्धत्वं सर्वधर्म्मातीतत्वमेकरसत्वम्। ननु कथं शुद्धचैतन्यस्य विचारविषयत्वं यावता प्रागपि विचारात् तत् स्वप्रकाशं स्वयमेवावभासत इत्याशङ्का स्वरूपेणावभासमानत्वेऽपि परिपूर्णसच्चिदानन्दप्रत्यक्स्वरूपतया ज्ञायमानत्वात् विषयत्वोपपत्तिरित्यभिप्रेत्याह, प्रमेयमिति।—प्रमेयत्वमज्ञातत्वम्। अयं भावः,—ब्रह्मात्मवस्तुनो विषयस्य अत्यन्ताप्रसिद्धौ न विचारप्रवृत्तिः सम्भवति, उद्देश्यविषयाप्रसिद्धेः; तथा यथावत् प्रसिद्धौ च न विचारप्रवृत्तिरनुपयोगात्। तथा च केनचिद्रूपेण प्रसिद्धं ब्रह्मात्मवस्तु उद्दिश्य विचारेण तद्याथात्म्यं निर्णयन्। तदिह ब्रह्मपदस्य निरतिशयमहत्त्ववति सामान्येन प्रसिद्धत्वादात्मपदस्य च प्रतीतिसामान्येन प्रसिद्धेः "अयमात्मा ब्रह्म" [ वृह० २ अ० ५ ब्रा० १९ मन्त्रः ] इत्यादौ समभिव्याहारादैक्यस्याप्यापाततः प्रसिद्धेस्तद्विशेषस्य च पारोक्ष्यसद्वयत्वाद्यनधिकरणत्वस्य देहेन्द्रियमनोबुद्धिप्राणाहङ्कृति-

सम्बन्धस्तु—तदैक्यप्रमेयस्य तत्प्रतिपादकोपनिषत्प्रमाणस्य च बोध्यबोधकभावः॥ २८॥

प्रयोजनन्तु—तदैक्यप्रमेयगताज्ञाननिवृत्तिः,

---

क्रमप्राप्तं सम्बन्धं लक्षयति,—सम्बन्धस्त्विति। बोध्यबोधकभावः, इति।—बोध्यस्य ब्रह्मात्मैक्यस्वरूपस्य बोधकस्य वेदान्तशास्त्रस्य च बोध्यबोधकभाव एव सम्बन्ध इत्यर्थः॥ २८॥ सु०।

अवशिष्टं प्रयोजनमाह, प्रयोजनं त्विति।—ब्रह्मात्मैकत्व-

---

विलक्षणतत्साक्षिप्रत्यगभिन्नसच्चिदानन्दाद्वयब्रह्मरूपत्वस्य चाप्रसिद्धेः सामान्यतः प्रसिद्धवस्तूद्देशेन तद्विशेषनिर्द्धारणाय विचारप्रवृत्त्युपपत्तिरिति। यद्वा—परोक्षतः प्रसिद्धं ब्रह्मात्मवस्तूद्दिश्य तत्स्वरूपसाक्षात्काराय विचारप्रवृत्त्युपपत्तिरिति। तथा च श्रुतिः,—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" [ बृह० २ अ० ४ ब्रा० ५ मन्त्रः ] इत्यात्मसाक्षात्कारमनूद्य तादर्थ्येन मनननिदिध्यासनाभ्यां फलोपकार्य्यङ्गाभ्यां सह श्रवणमनुष्ठेयं विधत्ते। स्मृतिरपि—"श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः। मत्वा च सततं ध्येय एते दर्शनहेतवः॥" इति।

ननु प्रधानादीनामपि कपिलकणादादिस्मृतिसिद्धानां वेदान्तवाक्यविषयत्वात् कथं जीवब्रह्मैक्यस्य विषयत्वसङ्कीर्त्तनमिति तत्राह, तत्रैवेति।—उपक्रमोपसंहारादिभिर्लिङ्गैर्वेदान्ततात्पर्य्ये निरूप्यमाणे प्रत्यक्स्वरूपे ब्रह्मण्येव पर्य्यवसानदर्शनात् प्रधानादिषु चादर्शनात् ब्रह्मैव वेदान्तविषयो न प्रधानादिरित्यर्थः, तथा च श्रुतिस्मृती भवतः,—"सर्वे वेदा यत्पदमामनन्ति" [ कठ० १ अ० २ वल्ली० १५ मन्त्रः ] इति "वेदैश्च सर्वैरहमेव वेद्यः" [ गीता० १५ अ० १५ श्लोकः ] इति च॥ २७॥ विद्व०।

तृतीयमनुबन्धमाह, सम्बन्धस्तु इति। तदैक्यं प्रत्यग्ब्रह्मणोरैक्यं, तच्च तत् प्रमेयञ्चेति तथा, तस्येति विग्रहः। ननु कथं यथोक्तप्रमेयस्योपनिषत्प्रमाणबोध्यत्वं निर्धर्मके तस्मिन् शब्दशक्तिगोचरत्वायोगादिति चेत् को भावः? शब्दादिहीनस्य वाच्यत्वानुपपत्तिरिति चेत् न, अनुक्तोपालम्भात्। असङ्गस्य लक्ष्यत्वानुपपत्तिरिति चेत्, यथा लक्षणावृत्त्याश्रयणेन ब्रह्मात्मैक्यप्रतिबोधस्तथोत्तरत्र वक्ष्यामः॥ २८॥ विद्व०।

चरममनुबन्धमाह, प्रयोजनन्त्विति।—तदैक्यप्रमेयशब्दः पूर्व्ववद् व्याख्येयः। अज्ञानञ्च वक्ष्यमाणलक्षणम्; तस्य निवृत्तिः प्रयोजनमित्येतावति उक्ते समूलदुःखो-

तत्स्वरूपानन्दावाप्तिश्च। "तरति शोकमात्मवित्" [छान्दो० ७अ० १ख० ३मन्त्रः] इति श्रुतेः "ब्रह्म वेद ब्रह्मैव भवति" [मुण्ड० ३ मुण्ड० २ खण्ड० ९ मन्त्रः] इत्यादिश्रुतेश्च ॥ २९ ॥

---

लक्षणचिन्मात्रगताज्ञानतत्कार्य्यसकलप्रपञ्चनिवृत्तिः पुनरुत्पत्त्यभावरूपा स्वस्वरूपाखण्डानन्दप्राप्तिश्च फलमित्यर्थः।

नन्‌ लोकेऽप्राप्तस्य क्रियासाध्यस्य स्वर्गादेः पुरुषार्थत्वेन फलत्वं दृष्टम्, अत्र तु नित्यप्राप्तस्यात्मस्वरूपस्य क्रियासाध्यत्वाभावेन पुरुषार्थत्वाभावात् कथं फलत्वम् इति चेत् न, अप्राप्तस्यैव पुरुषार्थत्वनियमाभावात्। यथा लोके कस्यचित् विस्मृतकण्ठमणेस्तत्प्रयुक्तशोकाग्निसन्दह्यमानस्याप्तोपदेशोत्तरकालं स्वकण्ठगतचामीकरप्राप्तेरपि पुरुषार्थत्वात् फलत्वं दृष्टम्, एवमत्रापि नित्यप्राप्तस्यात्मनः अज्ञानमोहान्धकारावृतत्वेन विस्मृतस्वस्वरूपस्य पुरुषस्य गुरुश्रुतिवाक्यश्रवणानन्तरम् अज्ञानमोहान्धकारनिवृत्तौ सत्यां स्वयं प्रकाशमानचिद्रूपस्य सिद्धस्यैवात्मनः फलत्वमुपचर्यते इति भावः। उक्तेऽर्थे श्रुतिं प्रमाणयति, तरतीति ॥ २९ ॥ सु०।

---

न्मूलनलक्षणं वैशेषिकाभिमतं प्रयोजनमपि अनुमतं प्रतिभायात्, तन्मा भूदिति विशेषणान्तरोपादानम्। अज्ञाननिवृत्तिरानन्दावाप्तिश्च प्रयोजनमित्युक्ते नित्यनिरतिशयसुखाभिव्यक्तिर्निःशेषदुःखोच्छित्तिश्च प्रयोजनमिति भाट्टाभिमतं प्रयोजनं प्रतिभायात्, तन्माभूदिति तत् स्वरूपेत्युक्तम्। ब्रह्मात्मचैतन्यस्य च आनन्दरूपत्वं प्रतिपादितमधस्तात्। विचारजन्यज्ञानस्योक्तोभयविधं प्रयोजनमित्यत्र क्रमेण श्रुती प्रमाणयति, तरतीत्यादिना।—आत्मवित् भूमाख्यब्रह्मात्मसाक्षात्कारवान् शोकोपलक्षितसंसारमूलाज्ञानं, तरति अतिक्रामति। यः कश्चिद्ब्रह्म परमात्मानं प्रत्यग्रूपं वेद साक्षात्करोति स ब्रह्मैव भवति तद्रूप एव भवतीत्यर्थः।

नतु अविद्यानिवृत्तेर्विद्यासाध्यत्वेन प्रयोजनत्वेऽपि कथं स्वरूपानन्दस्य तथात्वं तस्य

अयमधिकारी जननमरणादिसंसारानल-सन्तप्तो दीप्तशिरा जलराशिमिव उपहारपाणिः श्रोत्रियं ब्रह्मनिष्ठं गुरुमुपसृत्य तमनुसरति ।

अधुना शास्त्रारम्भनिमित्ताधिकार्य्यादिनिरूपणानन्तरं शास्त्रारम्भं प्रस्तौति, अथवा लक्षितस्याधिकारिणः कर्त्तव्य दर्शयति, अयमधिकारीति ।—उक्तलक्षणलक्षितो बुद्धिसन्निहितोऽधिकारी गुरुमुपसरतीत्यर्थः ।

ननु संसारासक्तचित्तस्य विषयलोलुपस्यार्त्तिरहितस्य गुरूपसर्पणमयुक्तमित्याशङ्क्याह, संसारानलसन्तप्त इति ।

सन्तापे हेतुमाह, जननेति ।—आदिशब्देन व्याध्यादयो गृह्यन्ते ।

सन्तप्तस्यैव गुरूपसर्पणमित्यत्र दृष्टान्तमाह, दीप्तशिरा इति ।—यथाऽग्निदग्धमस्तको दाहनिवृत्तिकामो झटिति शीतलं जलराशिमनुसरति, तथा संसारतापत्रयदन्दह्यमानस्तन्निवृत्तिकामः स्वस्वरूपजिज्ञासुः संसारनिवर्त्तकं श्रोत्रियं ब्रह्मनिष्ठं

नित्यप्राप्तत्वेन विद्यासाध्यत्वाभावादिति चेत् सत्यं नित्यप्राप्तमप्यानन्दात्मब्रह्मस्वरूपमविद्यावस्थायां विस्मृतकण्ठगतचामीकरवदनवाप्तमिव भवति । विद्यया तु अविद्यानिवृत्तौ विज्ञातचामीकरवद् अभिव्यक्तिमापद्यमानमवाप्तमिव व्यपदिश्यत इति न काचिदनुपपत्तिरिति भावः ॥ २९ ॥ विद० ।

एवं साधनचतुष्टयसम्पन्नस्याधिकारिणो विज्ञातविषयादिमतः आत्मयाथात्म्यजिज्ञासया गुरूपसत्तिं दर्शयति, अयमधिकारीति । जननमरणादीत्यादिपदात् रागद्वेषादिग्रहः । संसारानलसन्तप्तो गुरुमुपसृत्य तमनुसरतीत्यन्वयः । उपसरणं समीपगमनम्, अनुसरणमनुवृत्तिरिति भेदः । अत्युद्विग्नस्याविलम्बेन तच्छान्तिकरस्थानप्रवेशे दृष्टान्तमाह, दीप्तेति । निदाघमध्याह्नार्कमरीचिसंव्याप्तखल्वाटः दीप्तशिराः । शिशिरतरमधुरजलपरिपूर्णो महाह्रदो जलराशिः । "रिक्तपाणिर्न सेवेत राजानं दैवतं गुरुम्" इति वचनमाश्रित्याह, उपहारपाणिरिति ।—

"समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" [मुण्ड० १मुण्ड० २खण्ड० १२मन्त्रः] इत्यादिश्रुतेः ॥ ३० ॥

स परमकृपया अध्यारोपापवादन्यायेन

---

करतलामलकवत् स्वप्रकाशात्मस्वरूपसमर्पकं गुरुम्, उपसृत्य समीपं गत्वा, अनुसरति मनोवाक्कायकर्मभिः सेवत इत्यर्थः। अस्मिन् अर्थे श्रुतिमुदाहरति, समित्पाणिरित्यादि ॥ ३० ॥ सु०।

अथ गुरुकृत्यमाह, स इति।—स पूर्वोक्तो गुरुः, एनं शिष्यमुपदिशतीत्यन्वयः। परमरहस्यमपि ब्रह्मस्वरूपं कस्मादुपदिशति? इत्यत आह, परमकृपयेति।—कृपाव्यतिरेकेण साधनान्तराभावादित्यर्थः।

नन्वखण्डस्य ब्रह्मस्वरूपस्यागोचरत्वेनोपदेष्टुमशक्यत्वात् कथमुपदिशति? इत्यत आह, अध्यारोपेति।—अखण्डब्रह्मस्वरूपस्यागोचरत्वेन विधिमुखेनोपदेष्टुमशक्यत्वेऽपि "नेह

---

उपहार उपायनं पाणौ यस्य सः। श्रोत्रियं ब्रह्मनिष्ठमिति गुरोर्विशेषणे। श्रोत्रियत्वं वेदवेदाङ्गपारगत्वं वेदान्तार्थपारगत्वं वा प्रकृतोपयोगात्। श्रोत्रियग्रहणम् अकामहतत्वाद्वृजिनत्वयोरप्युपलक्षणार्थम्, "यश्च श्रोत्रियोऽवृजिनोऽकामहतः" [बृह० उप० ४ अ० ३ ब्रा० ३३ मन्त्रः] इति श्रुतेः। अकामहतत्वं—ब्रह्मलोकानन्दादर्वाचीनेषु आनन्देषु वितृष्णत्वम्। अवृजिनत्वं—यथोक्तकारितया निष्पापत्वम्। ब्रह्मनिष्ठत्वम्—औपनिषदब्रह्मात्मविज्ञानपरिपूर्णत्वमित्यर्थः। उक्तविधिना यथोक्तगुरूपसर्पणं विद्यार्थिनाऽवश्यं कर्त्तव्यमित्यत्र प्रमाणमाह, समिदिति।—समिच्छब्दो गुरोरनुरूपोपायनमात्रोपलक्षणपरः। आदिशब्दात् "आचार्य्यवान् पुरुषो वेद" [छान्दो० ६अ० १४ खण्ड० २ मन्त्रः] "आचार्य्याद्धैव विद्या विदिता साधिष्ठं प्रापयतीति" [छान्दो० ४ अ० ९ खण्ड० ३ मन्त्रः] इत्यादिश्रुत्यन्तरसङ्ग्रहः ॥ ३० ॥ विद्व०।

शिष्योपसत्त्यनन्तरं गुरोरुपदेशक्रमं दर्शयति, स परमेति। सः,—गुरुः। परमकृपया—प्रपन्नजनक्लेशदर्शनजातकरुणया तन्मतिप्रकाशनप्रवृत्त्या वा, तदुक्तमभियुक्तैः,—"एतदेव हि दयालुलक्षणं, यद्विनेयजनबुद्धिवर्द्धनम्" इति [संक्षेपशारीरकम् ४।३]

एनमुपदिशति। "तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय। येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तं तत्त्वतो ब्रह्मविद्याम्" [मुण्ड० १ मुण्ड० २ खण्ड० १३ मन्त्रः] इत्यादिश्रुतेः ॥ ३१ ॥

असर्पभूतायां रज्जौ सर्पारोपवत् वस्तुनि अवस्त्वारोपः अध्यारोपः ॥ ३२ ॥

---

नानास्ति किञ्चन" [ बृह० ४ अ० ४ ब्रा० १९ मन्त्रः ] इत्यादि श्रुतिमनुसृत्य अविद्यारोपितमिथ्यानानापदार्थनिषेधमुखेन उपलक्षितमखण्डचैतन्यमेव पुनः "सत्यं ज्ञानमनन्तं ब्रह्म" [ तैत्ति० उप० २ वल्ली १ अनु०] इत्यादिश्रुतिमनुसृत्य लक्षणया विधिमुखेनापि उपदिशतीति भावः। तत्र श्रुतिमाह,—"तस्मै सः" इत्यादि ॥३१॥ सु०।

अस्मिन्नर्थे लौकिकदृष्टान्तमाह, असर्पभूतायामिति।—व्यवहारिकवस्तुत्वेनाभिमतायां रज्जौ अवस्तुभूतसर्पारोपो नाम रज्ज्ववच्छिन्नचैतन्यस्था अविद्या सर्पज्ञानाभासाकारेण परिणममाना सर्पाकारेण विवर्त्तते, स विवर्त्तो रज्ज्ववच्छिन्नचैतन्य-

---

उक्तार्थज्ञापिकां श्रुतिं पठति, तस्मा इति।—तस्मा एतत्प्रोवाच। "यद्वेत्थ तेन मोपसीद ततस्त ऊर्द्धं वक्ष्यामि" [ छान्दो० ७ अ० १ खण्ड० १ मन्त्रः ] इत्यादि श्रुत्यन्तरमादिशब्दार्थः ॥ ३१ ॥ विद्व०।

अध्यारोपं सदृष्टान्तं लक्षयति, असर्पेति। ननु कथमवस्तुनी निरात्मकस्यारोपो यावता क्वचिद्दृष्टपूर्व्वस्य सत एव क्वचिदारोपो दृष्टः। उक्तं च भट्टाचार्य्यैः,—

"अध्यस्यते खपुष्पत्वमसत्कथमवस्तुनि। प्रज्ञातगुणसत्ताकमध्यारोप्येत वा न वा ॥"

इति [ तन्त्रवार्त्तिक० १।४।२२ ]। उच्यते।—संस्कारजन्यो हि भ्रमः, तत्सिद्धये पूर्वप्रतीतिमात्रमपेक्ष्यते, न पुनः पूर्वप्रतीतस्य परमार्थसत्त्वमपि व्यतिरेकाभावात् रूप्यस्य-

## वस्तु—सच्चिदानन्दमद्वयं ब्रह्म ॥ ३३ ॥

निष्ठाऽविद्योपादानत्वेन नायं सर्पः किन्तु रज्जुः, इति विशेषदर्शनोत्तरकालीनाधिष्ठानरज्जुसाक्षात्कारेण रज्ज्वज्ञाननिवृत्तौ सर्पभ्रान्तिर्निवर्त्तते इत्यर्थः ॥ ३२ ॥ सु० ।

उक्तमर्थं दार्ष्टान्तिके योजयति, वस्त्विति ।—कालत्रयानपायी आत्मैव वस्तुशब्दार्थः ॥ ३३ ॥ सु० ।

---

विपर्य्ययदृष्टेष्वपि संस्कारकार्य्यस्मृतिदर्शनात्। तथाहि लोकेऽनुभवः,—"अस्मिन् वल्मीककूटे मम पुरा स्थाणुः पुरुषो वेति सन्देह आसीत्, अस्मिन् शुक्तिशकले रजतमिदमिति भ्रम आसीत्" इत्यादिः। न च संशयविपर्य्ययोरेवेयं स्मृतिः, न तदर्थयोरिति वाच्यम्, अर्थशून्ययोस्तयोः स्मृतिविषयत्वानुपपत्तेः। तस्मान्निरुपाख्यविलक्षणस्य पूर्वपूर्वभ्रमदृष्टस्याप्युत्तरोत्तरारोपोपपत्तेर्भ्रमप्रवाहस्य चानादित्वेनान्योन्याश्रयानवस्थादिप्रसङ्गानवकाशाद्युक्तं वस्तुनि परमार्थसति अवस्तुनोऽनिर्वचनीयस्यारोप इत्यर्थः ॥ ३२ ॥ वि० ।

वस्त्ववस्तुनी क्रमेण लक्षयति, वस्त्विति। ननु ब्रह्मण एव वस्तुत्वे जीवस्य शुक्त्यादेश्चावस्तुत्वात् कर्त्तृत्वाद्यध्यारोपे रजताद्यध्यारोपे चाव्याप्तिः स्यादिति चेत् न, ब्रह्मण्येव जीवत्वस्यापि कल्पितत्वात् कर्त्तृत्वादेश्च सोपाधिकभ्रमतयोपाध्यनुरक्ते ब्रह्मण्येव अध्यारोपात् शुक्त्यादेरपि रजताद्यधिष्ठानचैतन्यावच्छेदकत्वेनाधिष्ठानत्वमुपचर्य्यते ; न पुनस्तस्यैवाधिष्ठानत्वम्, अज्ञातं हि वस्तु आरोपाधिष्ठानम् ; न च शुक्त्यादेरज्ञातत्वमस्ति, जडत्वात् चिन्मात्रनिष्ठत्वात् चिन्मात्रविषयत्वाच्च अज्ञानस्य। तदुक्तम्,—"यस्याज्ञानं भ्रमस्तस्य भ्रान्तः सम्यक् च वेत्ति सः। जड़ं न विद्यावेद्यत्वान्नातोऽज्ञानं जड़ाश्रयम् ॥" इति।

ततश्च सत्यस्य वस्तुनो मिथ्यावस्तुसम्भेदावभासोऽध्यारोप इत्युक्तं भवति। एतेन चिज्जड़योः परस्परतादात्म्याध्यासे शून्यमेव जगतस्तत्त्वं स्यादध्यस्तस्य मिथ्यात्वादिति केषाञ्चिच्चोद्यं निरस्तं, भ्रमकाले परिस्फुरदंशस्य मिथ्यात्वेऽप्यपरिस्फुरतोऽंशान्तरस्य विद्यमानत्वात्। तदुक्तमभियुक्तैः,—"अध्यस्तमेव हि परिस्फुरति भ्रमेषु नान्यत् कथञ्चन परिस्फुरति भ्रमेषु। रज्जुत्वशुक्तिशकलत्वमरुत्त्वचितित्वचन्द्रैकताप्रभृतिकानुपलम्भनेन ॥" इति [ सङ्क्षेपशारीरकम् १।३६ ] "किञ्चानृतद्वयमिहाध्यसितव्यमिष्टं स्याच्चेत्तदा भवति चोद्यमिदं त्वदीयम्। सत्यानृतात्मकमिदं मिथुनं मिथश्चेदध्यस्यते किमिति, शून्यकथाप्रसङ्गः ॥" [ संक्षेपशारीरकम् १।३३ ] इति च। तस्माद्युक्तमुक्तं

अज्ञानादिसकलजड़समूहः अवस्तु ॥ ३४ ॥

अज्ञानन्तु—सदसद्भ्याम् अनिर्वचनीयं,

---

तत्र अवस्तुस्वरूपमाह, अज्ञानादीति।—अज्ञानतज्जन्यव्योमादेर्मिथ्यात्वदृश्यत्वसावयवत्वविकारित्वसापेक्षसिद्धिकत्वादिहेतुभिरवस्तुत्वमित्यर्थः ॥ ३४ ॥ सु०।

एतदेव विस्तरेण प्रतिपादयितुमज्ञानस्वरूपं तावदाह, अज्ञानन्त्विति।—किमिदमज्ञानं सद्रूपमसद्रूपं वा? नाद्यः, तस्य शशविषाणतुल्यत्वेन तुच्छत्वात्; नापि द्वितीयः, असतः कारणत्वानुपपत्तेः; इत्यादिहेतुभिः सत्त्वेनासत्त्वेन वा निरूपयितुं न शक्यते इत्याह,—अनिर्वचनीयमिति।

---

वस्तु—सच्चिदानन्दमद्वयं ब्रह्म, तस्मिन्नज्ञानतत्कार्य्याखिलजड़समूहस्यावस्तुनोऽध्यारोप इति ॥ ३३ ॥ विद्व०।

अज्ञानं व्युत्पादयति, अज्ञानं तु इति।—तुशब्दो मतान्तरेभ्यो वैशिष्ट्यद्योतनार्थः। तमेव विशेषं दर्शयति, सदसद्भ्यामित्यादिना। ज्ञानविरोध्यज्ञानमित्युक्ते ज्ञानप्रागभावे प्रसङ्गं व्युदस्यति, भावरूपमिति। उत्तरज्ञानविरोधिपूर्वज्ञानव्युदासाय सदसद्भ्यामनिर्वचनीयमिति। मिथ्याज्ञानव्युदासाय त्रिगुणात्मकमिति। यद्वा—ज्ञानविरोधित्वं ज्ञानापनोद्यत्वं, तदेवाज्ञानत्वमित्यज्ञानलक्षणम्। न च ब्रह्मात्मैकत्वज्ञानापनोद्यप्रपञ्चेऽतिव्याप्तिस्तस्याज्ञानोपादानकत्वेन अज्ञानानतिरेकात्। नाप्यज्ञानात्मसम्बन्धेऽतिव्याप्तिः असङ्गस्वभावस्य चिदात्मनोऽज्ञानसम्बन्धस्याज्ञानाधीनत्वात् तस्याप्यज्ञानात्मत्वोपपत्तेः। अतो नानयोर्लक्ष्यवहिर्भाव इति न लक्षणस्यातिव्याप्तिः। अव्याप्त्यसम्भवयोस्तु शङ्कैव नास्ति, ज्ञानेनाज्ञानबाधस्य प्रसिद्धत्वात्। न च पूर्वज्ञाने ज्ञानप्रागभावे चातिव्याप्तिः, पूर्वज्ञानस्य ज्ञानापनोद्यत्वनियमाभावादिच्छादिहेत्वन्तरोत्पत्त्यापि तदपनोददर्शनात्। इह च नियमेन ज्ञानापनोद्यस्याज्ञानत्वाभ्युपगमात्, प्रागभावस्य च प्रतियोग्युत्पत्तिमात्रविरोधिनस्तदपनोद्यत्वाभावात्। न ह्यनुत्पन्नः प्रतियोगी कस्यचिदपनोदकः सम्भवति, अतो न तयोरतिव्याप्तिः।

नन्वज्ञानस्यापि ज्ञानोत्पत्तिनान्तरीयकतया विनाशाग्रहणात् कथं ज्ञानापनोद्यत्वमिति चेत्, न, ज्ञानोत्पत्त्यनन्तरं विलम्बाभावाभिप्रायेणाज्ञाननाशस्य ज्ञानोत्पत्ति-

त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत्किञ्चिदिति

ननु अज्ञानस्य अनिर्वचनीयत्वेन सर्वथा ज्ञातुमशक्यत्वात् तदभावप्रसङ्गमाशङ्क्याह, त्रिगुणात्मकमिति ।—"अजामेकाम्" [श्वेता० ४ अध्या० ५ मन्त्रः] इत्यादिश्रुतिभिः सत्त्वरजस्तमोगुणात्मकत्वप्रतिपादनादित्यर्थः ।

ननु एवमजस्याज्ञानस्य श्रुतिप्रसिद्धस्य व्योमादिरूपेण विततस्य सत्यवद्भासमानत्वेन संसारानिवृत्तिरित्याशङ्क्याह, ज्ञानविरोधीति ।—एतादृशमपि अज्ञानमात्मसाक्षात्कारेण निवर्त्तते इत्यर्थः । तदुक्तं भगवता,—"दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥" [भगवद्गीता ७ अध्या० १४ श्लोकः] इति ।

ज्ञानाभाव एवाज्ञानमिति तार्किकमतं निराकरोति, भावरूपमिति ।—

---

णान्तरीयकतावाचोयुक्तेराश्रयणात् भावाभावयोस्तु क्षणमात्रमपि सहभावानुपपत्तेरित्यस्ति प्रागभावाद्वैषम्यमज्ञानस्येति। सदसद्भ्यामनिर्वचनीयमित्यपरं लक्षणम् । अत्रापि पूर्ववदेवातिव्याप्त्यादिपरिहारो द्रष्टव्यः । नेदमसम्भवि ; अज्ञानस्य सत्त्वे चिदात्मवद्वाधाभावप्रसङ्गात् ; असत्त्वे च वन्ध्यासुतादिवदपरोक्षप्रतिभासानुपपत्तेः । बाधप्रतीत्योश्चाज्ञाने प्रसिद्धत्वादयुक्तं तस्यानिर्वचनीयत्वम् । सदसत्त्वपक्षयोरुक्तदूषणमुपजीव्य मिथ्याज्ञानसंस्कारोऽज्ञानमसत्प्रकाशनशक्तित्वेनासदेति मतद्वयं निरसनीयम् । मिथ्याज्ञानमात्मगुणोऽज्ञानमिति पक्षं निरस्यति, त्रिगुणात्मकमिति ।—गुणा लोहितशुक्लकृष्णा अज्ञानकार्य्येषु तेजोऽवन्नेष्ववान्तरप्रकृतिषु प्रसिद्धाः "यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य" [छान्दो० ६ अ० ४ खण्ड० १ मन्त्रः] इति श्रुतेः । तथा च कार्य्यगतत्रिरूपेण कारणमप्यज्ञानमव्याकृतात्मकं त्रिरूपेण त्रिगुणात्मकमिति यावत् । तथा च न्यायः,—"ज्योतिरुपक्रमा तु तथा ह्यधीयत एके" [ब्रह्म० सू० १अ० ४पा० ९सूत्र०] इति । यद्वा रजःसत्त्वतमोलक्षणास्त्रयो गुणाः तद्युक्तमज्ञानं त्रिगुणात्मकमिति । गुणगुणिनोरभेदविवक्षया त्रिगुणात्मकमित्युक्तं, तथा च गुणस्य गुणवत्त्वानुपपत्तेर्न मिथ्याज्ञानमज्ञानमित्यर्थः ।

वदन्ति। अहमज्ञ इत्याद्यनुभवात्, "देवात्मशक्तिं

त्रिगुणात्मकभावरूपत्वेऽपि इदमित्थमेवेति पिण्डीकृत्य प्रदर्शयितुं न शक्यते इत्याह, यत्किञ्चिदिति।—किमपि अघटितघटनापटीय इत्यर्थः।

अनिर्वचनीयानादिभावरूपाज्ञानसद्भावे अनुभवमेवोदाहृत्य दर्शयति, अहमिति।—अहमज्ञो मामहं न जानामीत्यप-

ज्ञानाभावोऽज्ञानमिति मतं निरस्यति,—भावरूपमिति। अयमर्थः,—अभावप्रतियोगि यज्ज्ञानं तत्किं साक्षिचैतन्यं स्यात्? "साक्षी चेता" [श्वेता० ६ अ० ११ मन्त्रः] इत्यादिश्रुतेस्तस्यापि ज्ञानत्वप्रसिद्धेः। किंवाऽन्तःकरणवृत्तिः? "विज्ञानेन वा ऋग्वेदं विजानाति" [छान्दो० ७अ० ७खण्ड० १ मन्त्रः] इति विज्ञानशब्देन बुद्धेः श्रवणात्। अथवाऽऽत्मगुणः? तथात्वेन च ज्ञानस्य वैशेषिकतन्त्रे प्रसिद्धत्वात्। तत्राद्यो न अभावप्रतियोगी तस्य नित्यत्वात्। द्वितीये ज्ञानशब्दस्योपचारिकत्वेन तदभावस्य मुख्यतोऽज्ञानत्वायोगात्। "येन वा पश्यति" इत्यारभ्य "प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः" [ऐतरेय आर० ६।१—३] इत्यन्तेन प्रज्ञाशब्दवाच्यप्रत्यक्चैतन्यव्याप्तस्यैव चक्षुरादिद्वारकबुद्धिपरिणामस्य सङ्कीर्त्तनात्। साङ्ख्यपक्षमाश्रित्यानौपचारिकत्वे स्वीक्रियमाणेऽपि न वृत्त्यभावोऽज्ञानं, वृत्त्यभावशब्देन वृत्त्युपादानबुद्धिस्वरूपावस्थानमात्रस्यैवाभिलापात्। अतः पक्षान्तरं परिशिष्यते, तत्रेदं वक्तव्यम्;—ज्ञानविशेषाभाव एवाज्ञानं ज्ञानसामान्याभावोऽपि वेति? नाद्यः, मूढोऽहं न किञ्चिज्ज्ञानामीत्यनुल्लिखितविषयविशेषस्याप्यज्ञानस्यानुभवात्। न च तत्रापि विषयविशेषपर्य्यवसायित्वं कल्प्यत इति वाच्यं, विनानुपपत्तिं सामान्यबुद्धेर्विशेषालम्बनत्वे सामान्यबुद्धिविलोपप्रसङ्गात्। तथा च घटवत्यपि भूतले घटसामान्यनिषेधप्रसङ्गः सुषुप्त्यभावप्रसङ्गश्च स्यात्। तस्माज्ज्ञानसामान्याभावोऽहमज्ञ इत्युल्लिख्यत इति वाच्यम्। तत्र चाभावज्ञानस्य धर्मिप्रतियोगिज्ञानसापेक्षत्वात्मनि धर्मिणि ज्ञाने च प्रतियोगिनि विज्ञायमाने तस्मिन्नेवात्मनि कथं ज्ञानाभावग्रहोऽभावप्रतियोगिनो ज्ञानस्य तत्र वर्त्तमानत्वात्। तयोरविज्ञायमानयोरपि कथं तत्राभावग्रहः कारणाभावात्। षष्ठप्रमाणपक्षेऽप्ययं न्याय ऊहनीयः। नन्वनुपपत्तौ सत्यां सामान्यबुद्धेरपि विशेषालम्बनत्वं कल्प्यते, यथा घटवत्यपि भूतले घटो नास्तीति बुद्धेर्विवक्षितघटाभावविषयत्वं, तद्वदिहापि सामान्याभावस्य यत्किञ्चित्प्रतियोगिसत्त्वविरोधा-

स्वगुणैर्निगूढाम्” [श्वेता० १ अध्या० ३ मन्त्रः]
इत्यादिश्रुतेश्च ॥ ३५ ॥

रोचावभास एव प्रमाणमित्यर्थः। तस्यैवोपष्टम्भकत्वेन श्रुति-
मुदाहरति,—देवात्मशक्तिमिति ॥ ३५ ॥ सु०।

दात्मनि विज्ञायमाने तस्मिन्ननुपपत्तेर्न किञ्चिज्जानामीति बुद्धेर्ज्ञानविशेषाभाव-विषयत्वं कल्प्यत इति चेन्न ; अनयैवानुपपत्त्या भावान्तरविषयत्वस्यैव कल्पनीयत्वात्। न हि मूढोऽहं सामान्यं किञ्चिदपि न जानामीत्यनुभवे किञ्चिद्विषयान्तरमवशिष्यते यज्ज्ञानाभावविषयत्वमस्य कल्प्येत। यथाऽस्मिन् भूतले न कोऽपि घटोऽस्तीति प्रत्यये घटविशेषस्य अनवशेषस्तद्वत्। नन्वप्रसिद्धभावान्तरकल्पनादिदं प्रसिद्धस्याभावस्यैव यथाकथञ्चिदपि अज्ञानबुद्धेर्विषयत्वकल्पनमिति चेन्न ; अत्यन्तमप्रसिद्ध्यभावात्। “देवात्मशक्तिं स्वगुणैर्निगूढाम्” [श्वेता० उप० १ अ० ३ मन्त्रः] “मायां तु प्रकृतिं” [श्वेता० उप० ४ अ० १० मन्त्रः] इति च श्रुतिवाक्ययोर्गुणवत्त्वेनोत्पद्यमानजगदुपादानत्वेन च प्रसिद्धत्वात्। तस्मान्नाभावोऽज्ञानं, किन्तु भावान्तरमेवेति।

ननु भावत्वमप्यज्ञानस्यानुपपन्नमनादेस्तस्य भावरूपत्वे चिदात्मवदनिवृत्तिप्रसङ्गादनिर्मोचापत्तेरित्यत आह, यत्किञ्चित् इति। अयमर्थः,—नास्माभिरज्ञानस्य भावत्वं परमार्थसत्त्वाभिप्रायेणोच्यते, किन्त्वभाववैलक्षण्याभिप्रायेण। न च भावाभावयोः परस्परप्रतिषेधेऽन्यतरविधिनान्तरीयकत्वात्प्रकारान्तरानुपपत्तिरिति वाच्यं, स्त्रीपुंप्रकृत्योः परस्परप्रतिस्पर्द्धिनोर्निषेधे तदन्यस्य नपुंसकस्येव भावाभावान्यस्याज्ञानस्योपपत्तेः। अथ तत्र प्रमाणान्तरेण तृतीया प्रकृतिरुपलभ्यत इति मतं, तर्ह्यत्राप्यस्ति प्रमाणं प्रतीतिबाधान्यथानुपपत्तिरिति सन्तोष्टव्यम्। वस्तुतस्तु नाचाम्याकमत्यन्तमाग्रहोऽज्ञाने सर्वानुपपत्तेरलङ्कारत्वात्। तदुक्तम्,—“अविद्याया अविद्यात्वमिदमेव तु लक्षणम्। यत्प्रमाणासहिष्णुत्वमन्यथा वस्तु सा भवेत् ॥” इति। “सेयं भ्रान्तिर्निरालम्बा सर्वन्यायविरोधिनी। सहते न विचारं सा तमो यद्वत् दिवाकरम् ॥” इति च। इष्टसिद्धावपि,—“दुर्घटत्वमविद्याया भूषणं न तु दूषणम्। कथञ्चिद्घटमानत्वेऽविद्यात्वं दुर्घटं भवेत् ॥” इति। तस्मात् सत्त्वेनासत्त्वेन सदसत्त्वेन वा सावयवनिरवयवोभयात्मकत्वेन वा भिन्नाभिन्नोभयरूपत्वेन वा निर्वक्तुमशक्यत्वेनानिर्वचनीयमज्ञानं, सवितरि दिवान्धपरिकल्पितान्धकारवत् यत्किञ्चिदिति वदन्ति वृद्धा इति सिद्धम्।

**इदमज्ञानं समष्टिव्यष्ट्यभिप्रायेणैकमनेकमिति च व्यवह्रियते ॥ ३६ ॥**

अज्ञानं विभजते, इदमज्ञानमिति।—वस्तुतोऽज्ञानस्यैकत्वेऽपि समष्ट्यभिप्रायेणैकमिति व्यवह्रियते, व्यष्ट्यभिप्रायेणानेकमित्यर्थः ॥ ३६ ॥ सु०।

इदानीं यथानिरूपितमज्ञानमेव नास्तीति विवदमानं प्रतिबोधयितुं तत्रानुभवश्रुती प्रमाणयति, अहमज्ञ इत्यादिना। अनुभवस्यास्य ज्ञानाभावविषयत्वं प्रतिक्षिपन्। निर्विकल्पकघटितप्रतियोगिकस्य ज्ञानसामान्याभावस्य स्वात्मनि प्रत्यक्षायोग्यत्वाच्च। न च भावरूपमप्यज्ञानमात्मनि ज्ञायमाने न ग्रहीतुं शक्यते तस्य ज्ञानविरोधित्वादिति वाच्यं, स्वप्रकाशसाक्षिचैतन्येन तस्य विरोधाभावात्। अन्तःकरणवृत्त्यैव तु विरोधादहमज्ञ इत्यहङ्कारगर्भस्य चोल्लिखस्य साक्षिप्रकाशिताज्ञानविषये स्फुटतरव्यवहारमात्रत्वाच्च न काचिदनुपपत्तिरिति भावः। देवस्य स्वयम्प्रकाशस्यात्मनः शक्तिं शक्तिवत् परतन्त्रां स्वगुणैः शुक्लादिभिः सत्त्वादिभिर्वा निगूढामालिङ्गितां ते ध्यानयोगानुगता अपश्यन्निति सम्बन्धः।—"अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः" [भगवद्गीता ५ अ० १४ श्लोकः] "नाहं प्रकाशः सर्व्वस्य योगमायासमावृतः" [भगवद्गीता ७ अ० २५श्लोकः] इत्यादिस्मृतिः। प्रत्यगात्मचैतन्यस्वरूपस्य ब्रह्मणो नित्यप्राप्तत्वेन स्वप्रकाशत्वेन चास्ति प्रकाशत इति व्यवहारपुष्कलकारणे सति नास्ति न प्रकाशत इति तद्विपरीतव्यवहारस्यात्मन्यावरणमन्तरेणानुपपत्तिः; "श्रोतव्यः" [बृह० २अ० ४ब्रा० ५ मन्त्रः] इत्यादिविधिना आत्मयाथात्म्यज्ञानाय श्रवणादिविधानानुपपत्तिश्चेत्यर्थापत्तिद्वयं चकारेण समुच्चीयते ॥ ३५ ॥ वि०।

ननु "अजामेकाम्" [श्वेता० उप० ४ अ० ५ मन्त्रः] "इन्द्रो मायाभिः" इति श्रुतिभ्य एकत्वानेकत्वयोरज्ञाने विप्रतिपत्तौ कः समाधिः? इति विवक्षायामाह, इदमिति।—व्यष्टिर्विशेषः समष्टिः सामान्यम्; व्यवह्रियते श्रुत्यादिष्विति शेषः। अयं भावः;—यो यदनुरक्तबुद्धिविषयो नियतः स तदात्मको यथा मृदनुरक्तबुद्धिविषयो घटो मृदात्मको दृष्टः, तथा सामान्यानुरक्तबुद्धिविषया विशेषाः सामान्यात्मका इति युक्तम्। सामान्यविशेषयोरत्यन्तभेदे गवाश्ववत् सामान्यविशेषभावानुपपत्तेः। भेदाभेदौ त्वेकस्मिन् अप्रामाणिकौ वस्तुनो द्वैरूप्यानुपपत्तेः। अभेदपक्षे तु कयाचिद्भेदकल्पनया सामान्यविशेषव्यवहारोपपत्तेः समुद्रतरङ्गादिवज्जलतरङ्गचन्द्रादिवद्वा; तथा

तथाहि यथा वृक्षाणां समष्ट्यभिप्रायेण वनमित्येकत्वव्यपदेशः, यथा वा जलानां समष्ट्यभिप्रायेण जलाशय इति, तथा नानात्वेन प्रतिभासमानानां जीवगताज्ञानानां समष्ट्यभिप्रायेण

---

एतदेव प्रपञ्चयितुं प्रतिजानीते, तथाहि यथेति।—यथा बहूनां वृक्षाणां समुदायविवक्षया वनमित्येकत्वव्यपदेशः, यथा वा बहुनद्यादिजलानां समुदायविवक्षया जलाशय इत्येकत्वव्यपदेशः, तथाऽन्तःकरणोपाधिभेदेन नानात्वेन प्रतीयमानानां जीवगताज्ञानानां समुदायविवक्षया अज्ञानमित्येकत्व-

---

चाज्ञानस्यैकस्यैव सतः सामान्यविशेषभावेनैकानेकत्वव्यवहारः श्रौतो न विरुध्यत इति ॥ ३६ ॥ विद्व०।

एतदेव दृष्टान्तैरुपपादयितुमुपक्रमते, तथा हि इत्यादिना। "पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः। पुरः स पक्षी भूत्वा पुरः पुरुष आविशत्" [ बृह० २अ० ५ ब्रा० १८ मन्त्रः ] "रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय" [ ऋग्वेद ४ अष्ट० ७ अध्या० ३३ वर्ग० ] इति मन्त्रद्वयानुसारेणाज्ञानतत्कार्य्यावच्छिन्नोऽज्ञानतत्कार्य्यप्रतिबिम्बितो वा चिदात्मा जीवेश्वरभावं भजत इति मतद्वयमुपरुध्य दृष्टान्तद्वयोपादानमिति सर्व्वत्र वनवृक्षजलाशयजलकीर्त्तनाभिप्रायो बोद्धव्यः।

नानात्वेन इत्यादेरयमर्थः। अज्ञानं किं ब्रह्मनिष्ठमुत जीवनिष्ठम्? नाद्यः, नित्यशुद्धत्वादिस्वभावविरोधात्। न द्वितीयोऽन्योन्याश्रयात्। तथा हि,—अज्ञानमित्युक्ते कस्य किंविषयमित्याश्रयविषयसापेक्षताप्रतीतेर्न निराश्रयमज्ञानमस्तीति प्रतिपत्तुं शक्यम्; तस्य च जीवाश्रयत्वे जीवभावस्याप्यज्ञानाधीनत्वात् सिद्धे जीवभावे अज्ञानस्य साश्रयत्वसिद्धिस्तत्सिद्धौ च जीवत्वसिद्धिरिति कथं नान्योन्याश्रयः? नन्वनादित्वादज्ञानजीवभावप्रवाहस्य बीजाङ्कुरवन्नान्योन्याश्रय इति चेत्, मैवं, क्रमभाव्यनेकबीजाङ्कुरव्यक्तिवदनेकाज्ञानजीवव्यक्तीनां सत्त्वे प्रमाणाभावात्। ननु "सता सौम्य तदा सम्पन्नो भवति" [ छान्दो० ६ अ० ८ खण्ड० १ मन्त्रः ] "तद्धेदं तर्ह्यव्याकृतमासीत्" [ बृह० १ अ० ४ ब्रा० ७ मन्त्रः ] इत्यादिश्रुतिभ्यः सुषुप्तिप्रलययोर्जीवस्य

तदेकत्वव्यपदेशः, "अजामेकाम्" [श्वेता० ४ अध्या० ५ मन्त्रः] इत्यादिश्रुतेः ॥ ३७ ॥

---

व्यपदेशः इत्यर्थः । अस्मिन्नर्थे श्रुतिं प्रमाणयति, अजामिति ॥ ३७ ॥ सु० ।

---

परमात्मैकभावादत्तिश्रवणात्पुनः प्रबोधसर्गयोर्जीवभावापत्तेरवगम्यमानत्वाच्च तदा तद्विभागहेतोः संस्काररूपस्याज्ञानस्यापि कल्प्यमानत्वात्कथं न बीजाङ्कुरन्यायः प्रामाणिक इति चेत्, तत्किमिदानीं सुषुप्त्यादिकाले जीवस्य जीवत्वं नास्तीति विवक्षितम्। हन्त तर्हि कृतनाशाकृताभ्यागमप्रसङ्गो मुक्तानामपि संसारित्वप्रसङ्गश्च दुर्वारः स्यादविशेषात्। किञ्च, सुषुप्त्यादावज्ञानसद्भावे तस्य ब्रह्माश्रितत्वप्रसङ्गोऽसद्भावे सुप्तानां पुनरनुत्थानप्रसङ्गः। "त इह व्याघ्रो वा सिंहो वा" [छान्दो० ६ अ० ९ खण्ड० २ मन्त्रः] इत्यादिसत्सम्पत्तिवाक्यशेषासङ्गतिप्रसङ्गश्चेत्यसमञ्जसमेतत्। अथाज्ञानजीवयोः स्वरूपेणैवानादितया आश्रयाश्रयिभावस्य नित्यसिद्धत्वान्नान्योन्याश्रय इति मतं, तदपि न ब्रह्मण्यज्ञानाभावप्रसङ्गात्। नायमिष्टप्रसङ्गः "सोऽकामयत" [तैत्ति० २वल्ली० ६अनु० १मन्त्रः] "तदात्मानं स्वयमकुरुत" [तैत्ति० २वल्ली० ७अनु० १मन्त्रः] इत्यादिश्रुतिभिर्ब्रह्मणि जगत्कारणे कामयितृत्वादेरज्ञानकार्य्यस्य श्रूयमाणत्वात्। न च दृष्टिगतपीतिम्नः शङ्खे समारोपवज्जीवगताज्ञानविक्षेपस्य कामयितृत्वादेः तद्विषये ब्रह्मणि समारोपः श्रुत्या कीर्त्त्यत इति वाच्यं, तथा सति जीवानामेव जगत्सर्गस्थितिलयोपादानत्वात् "सर्वं खल्विदं ब्रह्म" [छान्दो० ३ अ० १४ खण्ड० १ मन्त्रः] इत्यादिब्रह्मसामानाधिकरण्यं जगतः श्रूयमाणमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानञ्च पीड्येत। जीवस्य ब्रह्माभेदात् सर्वमेवोपपद्यत इति न कश्चिद्दोष इति चेत् तर्हि जीवपक्षपातं परित्यज्य ब्रह्मण एव जगत्स्रष्टृत्वादि यथाश्रुतं स्वीकर्त्तव्यम्। विना तस्याज्ञानाश्रयत्वं कूटस्थस्य न कामयितृत्वादीत्युक्तं तस्य च जीवाद्विभक्तस्याज्ञानाश्रयत्वे तत्रापि स्यादन्योन्याश्रयः। ननु ब्रह्मणि जगत्कारणत्वादिनिर्वाहकमज्ञानं मायाशब्दवाच्यमन्यदेव जीवगतकर्त्तृत्वाद्यवभासहेतुभ्योऽज्ञानेभ्योऽविद्याशब्दवाच्येभ्य इति चेन्न, मायाविद्ययोः श्रुतिस्मृतिसूत्राभियुक्तवचनैरेकत्वस्य बह्वैर्निरूपितत्वात्। अनिर्वचनीयत्वे सति तत्त्वावभासप्रतिबन्धविपर्य्ययावभासहेतुत्वस्य लक्षणस्य तुल्यत्वात् अविद्याभेदे च कल्पनागौरवदोषात्। एकाविद्यापक्षेऽप्यनन्तविक्षेपशक्तिकल्पनया जाग्रत्स्वप्नबन्धमोक्षरशनाभुजङ्गादिव्यवहारव्यवस्थोपपत्तेः। न

चाचापि कल्पनागौरवं समानं धर्म्मिभेदकल्पनातो धर्म्मभेदकल्पने लाघवात्। इत्यास्तां विस्तरः।

अतश्चिन्मात्रनिष्ठमज्ञानं तच्च जीवब्रह्मविभागहेतुर्ब्रह्मणो जगत्स्रष्टृत्वादेर्जीवस्य कर्त्तृत्वादेश्च हेतुरित्यङ्गीकर्त्तव्यम्। न च चिन्मात्रस्य स्वप्रकाशत्वादज्ञानाश्रयत्वविरोधः, जीवपक्षेऽपि तुल्यत्वात् अन्तःकरणपरिणामोपहितस्यैव चैतन्यस्याज्ञानविरोधित्वात्। न च ज्ञानवदज्ञानस्याप्येकाश्रयविषयत्वानुपपत्तिरावरकत्वेनावरकस्य तमोवत्तदुपपत्तेः। तदुक्तमभियुक्तैः,—"आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला। पूर्व्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः॥" इति। [ संक्षेपशारीरकम् १।३१६ ) तस्मादेकमज्ञानं चिन्मात्राश्रयविषयमिति स्थिते जीवावस्थायामेवाहमज्ञ इति स्फुटतरव्यवहारात् तदपेक्षया जीवगताज्ञानात्मित्युक्तमिति। अनयैव दिशा,—"जीवाश्रया ब्रह्मपदा ह्यविद्या तत्त्वविन्मता"। [ वेदान्तसिद्धान्तमुक्तावली ३ श्लोकः ११ पृष्ठा ] इति प्राचां वचनं योजनीयम्।

ननु नानात्वेन प्रतिभासमानानां जीवानामेकाज्ञानोपाधिकत्वे एकमुक्तौ सर्वमुक्तिप्रसङ्ग इति चेत्, नायं दोषः; एकस्यैव जीवत्वादितरेषां तद्दृष्टिविजृम्भितत्वेन ततोऽनतिरेकात्। तर्हि कोऽसौ जीवो यद्दृष्टिविजृम्भितं जीवान्तरमिति चेत् यः पश्यति स एव। अहन्तु संसारिणमात्मानमन्यांश्च मद्विधान् जीवान् पश्यामीति चेत् तर्हि त्वमेव जीवस्त्वदविद्यया वयमन्ये च जीवा बद्धा मुक्ताः सुखिनो दुःखिन इत्येवं विचित्राः कल्पितास्तवाब्रह्मसाक्षात्कारमविसंवादिताः प्रतिभासन्ते स्वप्न इवाप्रबोधम्। जाते तु ब्रह्मात्मसाक्षात्कारे सर्वमेव त्वद्दृष्टिविजृम्भितं त्वया सह मोक्ष्यते त्वत्सुषुप्ताविवेति। इयांस्तु पुनर्विशेषः। सुषुप्तावस्थज्ञानं सर्वकार्य्यसंस्कारोपरञ्जितं पुनर्व्यवहारप्रवर्त्तकं मुक्तौ तु तस्य ज्ञानेन बाधितत्वात् पुनर्व्यवहाराभावः। इत्यलं प्रसङ्गागतप्रपञ्चेन। वनवृक्षयोर्जलाशयजलयोर्वा सामान्यविशेषभावो नास्तीति यद्यपि दार्ष्टान्तिकेन वैषम्यं, तथापि समुदायसमुदायिनोरेकत्वे दृष्टान्तदार्ष्टान्तिकयोः साम्यात् सर्व्वांशेन च साम्यस्याविवक्षितत्वान्न कश्चिद्दोष इति गमयितव्यम्। अज्ञानैकत्वव्यपदेशिनीं श्रुतिं पठति "अजामेकाम्" इति। आदिपदात् "मायान्तु प्रकृतिं विद्यात्" [ श्वेता० उप० ४अ० १०मन्त्रः ] "तरत्यविद्यां वितताम्" [ अद्वैतब्रह्मसिद्धिः ] "अक्षरात्परतः परः" [ मुण्ड० २मुण्ड० १खण्ड० २मन्त्रः ] "तद्धेदं तर्ह्यव्याकृतम्" [ वृह० उप० १अ० ४ब्रा० ७मन्त्रः ] "तम आसीत्तमसा गूढ़" [ ऋक्संहिता ८ अष्ट० ७ अध्या० १७ वर्ग० ] इत्याद्येकवचनान्तश्रुत्यन्तरग्रहः॥ ३७॥ विद्व०।

इयं समष्टिरुत्कृष्टोपाधितया विशुद्धसत्त्वप्रधाना; एतदुपहितं चैतन्यं सर्व्वज्ञत्वसर्व्वेश्वरत्वसर्व्वनियन्तृत्वादिगुणकमव्यक्तमन्तर्य्यामी जगत् कारणमीश्वर इति च व्यपदिश्यते ॥ ३८ ॥

---

नानाजीवगतनिकृष्टान्तःकरणव्यष्ट्युपाध्यपेक्षया समष्ट्युपाधेरस्य वैलक्षण्यं दर्शयति, इयं समष्टिरिति।—विगतरागादिदोषसकलकार्य्यप्रपञ्चस्य जगत्कारणभूतस्याज्ञानस्य समष्टिभूतोत्कृष्टोपाधित्वेन विशुद्धसत्त्वप्राधान्यमिति भावः।

एतत् समष्ट्युपाधिद्वारेण ईश्वरचैतन्यं लक्षयति, एतदुपहितमिति।—एतत् समष्ट्यज्ञानोपलक्षितं चैतन्यं सर्वस्य चराचरात्मकप्रपञ्चस्य साक्षित्वेन सर्वज्ञ इत्युच्यते ; सर्वेषां जीवानाम् ईशितत्वेन कर्म्मानुरूपेप्सितफलदातृत्वेन ईश्वर इत्युच्यते, सर्वेषां जीवानां प्रेरकत्वेन नियन्तेत्युच्यते, प्रमाणागोचरत्वात् अव्यक्तमित्युच्यते, सर्वेषां जीवानामन्तर्हृदये स्थित्वा बुद्धिनियामकत्वेनान्तर्य्यामीत्युच्यते, तथा सर्वस्य चराचरात्मकप्रपञ्चस्य विवर्त्ताधिष्ठानत्वेन जगत्कारणमिति च व्यपदिश्यते इत्यर्थः॥ ३८ ॥ सु०।

---

एकमेवाज्ञानं समष्टिव्यष्टिभेदभिन्नं परिकल्प्य समष्ट्यज्ञानोपधाननिबन्धनं चैतन्यव्यवहारं वक्तुं समष्टिं विशिनष्टि, इयमिति। उत्कृष्टस्योपाध्यन्तराननुरक्ततयाऽप्रतिहतज्ञानात्मकस्य चैतन्यस्योपाधितया विशुद्धं रजस्तमोभ्यामनभिभूतं सत्त्वं प्रधानं यस्याः सा तथाविधेयं समष्टिरित्यर्थः। समष्ट्यज्ञानोपहितचैतन्यस्य व्यपदेशभेदं दर्शयति, एतदिति। परमार्थतोऽसङ्गस्यापि चैतन्यस्याध्यासिकसम्बन्धसम्बद्धाज्ञानद्वारा सर्वावभासकत्वेन सर्व्वसर्य्यादाधारकसत्तारूपत्वेन सर्व्वजीवप्रवर्त्तकत्वेन च लब्धसर्व्वज्ञत्वादिगुणकस्य सदव्यक्तमन्तर्य्यामीश्वर इत्यादिव्यपदेशो भवतीत्यर्थः ॥ ३८ ॥ विद्व०।

सकलाज्ञानावभासकत्वादस्य सर्व्वज्ञत्वम्। "यः सर्व्वज्ञः सर्व्ववित्" [ मुण्ड० १ मुण्ड० १ खण्ड० ९ मन्त्रः ] इति श्रुतेः ॥ ३९ ॥

अस्येयं समष्टिरखिलकारणत्वात् कारणशरीरम्, आनन्दप्रचुरत्वात् कोषवदाच्छादक-

उक्तेऽर्थे युक्तिमाह, सकलाज्ञानेति। तत्र प्रमाणमाह,—यः सर्वज्ञ इति ॥ ३९ ॥ सु०।

इदानीं तस्यैवेश्वरस्य समुदायोपाधिरेव कारणशरीरत्वमानन्दमयकोषत्वं सुषुप्त्यवस्थावैशिष्ट्यञ्च लभते इत्याह, अस्येयमिति। कारणशरीरत्वे हेतुमाह, अखिलेति। आनन्दमयत्वे हेतुमाह, आनन्दप्रचुरत्वादिति। कारणत्वावस्थायां प्रकृतिपुरुषमात्रव्यतिरिक्तस्य स्थूलसूक्ष्मकार्य्यप्रपञ्चस्यैव अभावादानन्दबाहुल्यमिति।

कोषत्वे युक्तिमाह, आच्छादकत्वादिति।—शरीराच्छादकचर्म्मवत् आत्माच्छादकत्वादज्ञानस्य कोष इति व्यवहारः।

उक्तेऽर्थे हेतुमाह, सकलेति। सकलाज्ञानं—समष्ट्यज्ञानम्। अवभासकत्वशब्दो विधारकत्वादेरप्युपलक्षणार्थः। सर्व्वविक्षेपसंस्कारवत्त्वादज्ञानस्य सत्कार्य्यवादाश्रयणात्त्वाव्याकृताद्यवस्थास्वपि समष्ट्यज्ञानस्य सर्व्वत्वमिति द्रष्टव्यम्। उक्तव्यपदेशिकां श्रुतिमाह "यः सर्व्वज्ञः" इति। सर्व्वज्ञः सामान्यतः सर्व्वविद्विशेषत इति भेदः। आदिशब्दात् "सदेव सौम्येदं" [ छान्दो० ६ अ० २ खण्ड० १ मन्त्रः ] "एष सेतुर्व्विधरणः" [ बृह० ४ अ० ४ ब्रा० २२ मन्त्रः ] "एष त आत्मान्तर्य्याम्यमृतः" [ बृह० उप० ३ अ० ७ ब्रा० ३ मन्त्रः ] "महतः परमव्यक्तं" [ कठ० १ अ० ३ वल्ली० ११ मन्त्रः ] "यतो वा इमानि" [ तैत्ति० ३ वल्ली० १ अनु० ] "यः परः स महेश्वरः" इत्यादि श्रुत्यन्तरग्रहः ॥ ३९ ॥ विद्व०।

उपहितस्य व्यपदेशभेदमुक्त्वोपाधेरपि तं सहेतुकमाह, अस्येयम् इति। अज्ञानमिदंशब्दार्थः। आनन्दप्रचुरत्वमुपहितधर्म्म आच्छादकत्वमज्ञानधर्म्म ; तदुभया-

त्वाच्च आनन्दमयकोषः, सर्व्वोपरमत्वात् सुषुप्तिः, अत एव स्थूलसूक्ष्मप्रपञ्चलयस्थानमिति चोच्यते ॥ ४० ॥

यथा वनस्य व्यष्ट्यभिप्रायेण वृक्षा इत्यनेकत्वव्यपदेशः, यथा वा जलाशयस्य व्यष्ट्यभिप्रायेण

---

ननु तथापि कारणत्वोपाधेरज्ञानस्य सुषुप्तित्वं कुतः ? इत्यत आह, सर्व्वोपरमत्वादिति।—सर्वस्य स्थूलसूक्ष्मोपाधेः कारणोपाधौ लीनत्वात् सुषुप्तित्वमित्यर्थः।

ननु स्थूलसूक्ष्मप्रपञ्चलयस्थानस्य कथं सुषुप्तित्वम्? इत्याशङ्क्य संज्ञाभेदो न वस्तुभेदः इत्याह, अत एवेति।—यतः कारणात् सुषुप्तित्वम् अत एव पञ्चीकृतभूतकार्य्यस्य स्थूलप्रपञ्चस्य जाग्रदवस्थाविशिष्टस्यापञ्चीकृतभूतकार्य्यस्य सूक्ष्मस्वाप्नप्रपञ्चस्य च लयस्थानमित्यपि व्यवह्रियते इत्यर्थः ॥ ४० ॥ सु० ।

समष्टिरूपाज्ञानं सप्रपञ्चं निरूप्य इदानीं व्यष्टिरूपमज्ञानं सप्रपञ्चं निरूपयितुं दृष्टान्तौ तावद्दर्शयति, यथा वनस्येति।—यथा बहुवृक्षसमुदायस्य वनरूपत्वेन एकत्वव्यवहारेऽपि प्रत्येकवृक्षविवक्षया चूतादयो बहवो वृक्षास्तिष्ठन्तीति बहुत्वव्यवहारः, यथा वा वापीकूपतड़ागादिषु समुदायविवक्षया जलाशय

---

विवेकात्कारणमज्ञानमानन्दमयकोष इत्यर्थः। सर्व्वे आकाशादय उपरमन्तेऽस्मिन् इति सर्व्वोपरमोऽज्ञानम्। तादृग्भावात् सुषुप्तिः महासुषुप्तिः, प्रलय इति यावत्। यतः सर्व्वोपरमत्वमत एवेति योजना। स्थूलप्रपञ्चो विराट् सूक्ष्मप्रपञ्चो हिरण्यगर्भः ॥ ४० ॥ विद्व० ।

एवं समष्ट्यज्ञानं साभासं सव्यपदेशं निरूप्य व्यष्ट्यज्ञानमपि सदृष्टान्तं तथा निरूपयति, यथा वनस्य इत्यादिना। कथमनेकत्वव्यपदेशोऽज्ञानस्येति तदाह,

जलानीति, तथाऽज्ञानस्य व्यष्ट्यभिप्रायेण तदनेकत्वव्यपदेशः। "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादिश्रुतेः ॥ ४१ ॥

अत्र व्यस्तसमस्तव्यापित्वेन व्यष्टिसमष्टिताव्यपदेशः ॥ ४२ ॥

इयं व्यष्टिर्निकृष्टोपाधितया मलिनसत्त्वप्रधाना ॥ ४३ ॥

---

इत्येकत्वव्यवहारेऽपि प्रत्येकं वाप्यादिविवक्षया बहूनि जलानि तिष्ठन्तीति बहुत्वव्यवहारः, तथा सकलप्रपञ्चकारणस्य अज्ञानस्य समुदायरूपेण एकत्वेऽपि अहङ्कारादिकारणीभूतानां जीवगताज्ञानानां प्रत्येकविवक्षया बहुत्वव्यवहार इत्यर्थः। अस्मिन्नर्थे श्रुतिं प्रमाणयति,—इन्द्र इति ॥ ४१ ॥ सु०।

ननु तथाप्येकस्यैव अज्ञानस्य तदवच्छिन्नचैतन्यस्य वा व्यष्टिसमष्टिता कुतः? इत्यत आह, अत्र व्यस्तेति।—भेदविवक्षया व्यष्टित्वं मृद्घटादिवत्, अभेदविवक्षया समष्टित्वं मृत्पिण्डवदित्यर्थः ॥ ४२ ॥ सु०।

तत्र महाप्रलयकालीनसमष्टिभूतविशुद्धसत्त्वप्रधानाया मूल-

---

इन्द्र इति। इन्द्रः परमेश्वरः प्रकरणात्। स मायाभिर्मायाविक्षेपशक्तिभिर्विचित्रेषु देहेन्द्रियान्तःकरणेषु प्रतिबिम्बितः पुरुरूपो बहुरूपः सन्नीयते प्रकाशत इति श्रुत्यर्थः। आदिशब्दात् "य एको जालवानीशत ईशनीभिः" [ श्वेता० उप० ३अध्या० १मन्त्रः ] इत्यादिश्रुत्यन्तरग्रहः ॥ ४१ ॥ विद्व०।

एकस्मिन्नज्ञाने व्यष्टिसमष्टिशब्दप्रयोगे निमित्तमाह, अत्रेति। अज्ञानं सप्तम्यर्थः। व्यस्तव्यापित्वेन कार्य्योपाधिजीवव्यापित्वावभासेन व्यष्टिताव्यपदेशः। समस्तव्यापित्वेन कारणोपाधिसर्वज्ञाविभक्तसर्वव्यापित्वेन समष्टिताव्यपदेशः इत्यर्थः ॥ ४२ ॥ विद्व०।

निकृष्टोपाधितया इति।—ज्ञानप्रतिबन्धकावरणवान् जीवो निकृष्टस्तस्योपाधि-

एतदुपहितं चैतन्यमल्पज्ञत्वानीश्वरत्वादिगुणकं प्राज्ञ इत्युच्यते ॥ ४४ ॥

एकाज्ञानावभासकत्वादस्य प्राज्ञत्वम्, अस्पष्टोपाधितयाऽनतिप्रकाशकत्वम् ॥ ४५ ॥

---

प्रकृतेः सकाशात् दैनन्दिनप्रलयकालीनव्यष्ट्युपाधिभूतजीवप्रकृतेर्भेदं दर्शयति, इयं व्यष्टिरिति।—इयं जीवगता सुषुप्त्यवस्थापन्नाहङ्कारादिविक्षेपसंस्कारादिरूपा निकृष्टोपाधित्वेन मलिनसत्त्वप्रधाना इत्यर्थः ॥ ४३ ॥ सु० ।

अनेनोपाधिना प्राज्ञचैतन्यं लक्षयति,—एतदुपहितमिति ॥ ४४ ॥ सु० ।

अत्रोपपत्तिमाह, एकाज्ञानेति।—ईश्वरगतमूलाज्ञानस्य जीवगताहङ्कारादिविक्षेपसंस्कारादिरूपाज्ञानस्य च वस्तुत एकत्वेन तदवभासकेश्वरजीवचैतन्ययोरप्येकत्वमित्यर्थः ।

सौषुप्तजीवचैतन्यस्य प्राज्ञत्वं साधयति, अस्य प्राज्ञत्वमिति।—संस्काररूपास्पष्टोपाधितया तदावृतत्वेनातिप्रकाशकत्वाभावात् प्राज्ञत्वमस्येत्यर्थः ॥ ४५ ॥ सु० ।

---

तथेत्यर्थः । मलिनं रजस्तमोभ्यामभिभूतं सत्त्वं प्रधानं यस्याः सा तथा । रजस्तमसोः स्वातन्त्र्येण प्रतिबिम्बोद्ग्राहकत्वायोगादिति भावः ॥ ४३ ॥ विद्व० ।

एतदुपहितं व्यष्ट्यज्ञानोपहितम् ॥ ४४ ॥ विद्व० ।

एकाज्ञानावभासकत्वात्—अज्ञानैकदेशावभासकत्वादिति यावत् । व्यष्ट्यज्ञानोपहितस्य प्राज्ञशब्दवाच्यत्वे कारणमाह, अस्येति । अस्य जीवस्यास्पष्टोपाधितया रजस्तमोभ्यामभिभूतसत्त्वप्रधानव्यष्ट्यज्ञानोपाधिकत्वेन हेतुनाऽतिप्रकाशकत्वाभावात् प्राज्ञशब्दवाच्यत्वमित्यर्थः । प्रायेणाज्ञः प्राज्ञ इत्युक्तं भवति ॥ ४५ ॥ विद्व० ।

अस्यापीयमहङ्कारादिकारणत्वात् कारणशरीरम्, आनन्दप्रचुरत्वात् कोषवदाच्छादकत्वाच्च आनन्दमयकोषः, सर्व्वोपरमत्वात् सुषुप्तिः, अत एव स्थूलसूक्ष्मशरीरप्रपञ्चलयस्थानमिति चोच्यते ॥ ४६ ॥

यथा जगत्कारणेश्वरोपाधेः कारणशरीरत्वमानन्दप्रचुरत्वेन चानन्दमयत्वं, कोषदृष्टान्तेन च कोषत्वं, तथैतत् सर्वं तारतम्येन प्राज्ञचैतन्येऽप्यतिदिशति, अहङ्कारादीति।—प्रलयकाले हिरण्यगर्भादिप्रपञ्चोत्पादकेश्वरगतमूलप्रकृतिवत् सुषुप्तिकाले अहङ्कारादिशरीरोत्पादकसंस्कारमात्रावशिष्टजीवगताज्ञानस्यापि कारणशरीरत्वम् इन्द्रियतद्विषयाभावेन व्यासङ्गाभावादानन्दबाहुल्यादानन्दमयत्वम् आत्माच्छादकत्वात् कोषत्वञ्च युक्तमिति भावः।

ननु स्थूलसूक्ष्मशरीरलयस्थानस्य कथं सुषुप्तिशब्दवाच्यत्वम्? इत्याशङ्क्य पूर्ववत् संज्ञाभेदो न वस्तुभेद इति वक्तुं तत्र युक्तिमाह, सर्वोपरमत्वादिति।—पञ्चीकृतस्थूलशरीरस्य व्यावहारिकस्यापञ्चीकृतसूक्ष्मशरीरे प्रातिभासिके प्रविलापितत्वात् तस्यापि प्रातिभासिकस्य स्वाप्नप्रपञ्चस्य स्वकारणेऽज्ञाने लीनत्वात् सर्वोपरतिरित्यर्थः। तथा चोक्तं,—"लये फेनस्य तद्धर्मा द्रवाद्याः स्युस्तरङ्गके। तस्यापि विलये नीरे तिष्ठन्त्येते यथा पुरा॥

पूर्ववदुपहितस्य व्यपदेशमुक्त्वा उपाधेरप्याह, अस्यापीति।—अपिशब्द ईश्वरोपाधिदृष्टान्तार्थः। अहङ्कारादेः सुषुप्त्याद्यवस्थायां संस्कारावशेषेण स्थितस्य कारणत्वादित्यर्थः। आनन्दप्रचुरत्वादेवेत्येवकारः कोषवदाच्छादकत्वादिति हेत्वन्तरसमुच्चयार्थः; यद्वा,—आनन्दप्रचुरत्वाद्धेतोरेवेति भिन्नक्रमः। तस्मिन् पक्षे कोषवदाच्छादकत्वादित्यनुषञ्जनीयम्। सर्वशब्दो जाग्रत्स्वप्नविषयः। शेषमति-

तदानीमेतौ ईश्वरप्राज्ञौ चैतन्यप्रदीप्ताभिः अतिसूक्ष्माभिरज्ञानवृत्तिभिः आनन्दमनुभवतः ।

---

व्यावहारिकदेहस्य लयः स्यात् प्रातिभासिके । तल्लये सच्चिदानन्दाः पर्य्यवस्यन्ति साक्षिणि ॥" इति [ वाक्यसुधा ४६।४७ श्लोकौ ] ॥ ४६ ॥ सु० ।

ननु प्रलयकाले सुषुप्तिकाले च अन्तःकरणतद्वृत्त्यभावेनानन्दग्राहकाभावादानन्दप्राचुर्य्यसद्भावे प्रमाणाभावमाशङ्क्य परिहरति, तदानीमिति ।—यथा स्वच्छत्वेन अन्तःकरणस्य वृत्तिरङ्गीक्रियते, तथा चैतन्यप्रदीप्ताज्ञानस्यापि सूक्ष्मा वृत्तयः स्वीक्रियन्ते ; तथात्मा च ईश्वरः स्वकीयाज्ञानवृत्तिभिः स्वानन्दबाहुल्यमनुभवति, जीवोऽपि संस्कारमात्रावशिष्टाज्ञानवृत्तिभिः स्वानन्दबाहुल्यं तारतम्येन अनुभवतीति भावः ।

---

रोहितार्थम् । "सता सौम्य तदा सम्पन्नो भवति" [ छान्दो० ६अ० ८खण्ड० १मन्त्रः ] इत्यादिश्रुतेः ॥ ४६ ॥ विद्व० ।

सुषुप्तौ प्राज्ञस्येश्वरसम्पत्त्यवगमात् प्राज्ञेश्वरयोरेकत्वं तदवस्थयोरपि अव्याकृतसुषुप्त्योरेकत्वं सिद्धवत्कृत्यानयोस्तदवस्थापन्नं भोगं दर्शयति, तदानीम् इति । तयोरप्यवस्थयोर्जीवावच्छेदकस्य व्यष्ट्यज्ञानस्य केनापि रूपेण स्थितत्वादेतावित्यादिद्विवचनोपादानं सर्वात्मनैक्ये पुनरुत्थानानुपपत्तेः । आनन्दं स्वरूपानन्दमनुभवतः । आनन्दशब्दोऽज्ञानतत्साक्षिणोरप्युपलक्षणपरः । तदानीमखण्डात्मस्वरूपचैतन्येनैवानन्दाद्यनुभवेऽभ्युपगम्यमाने स्वरूपस्य नित्यत्वात् तज्जन्यसंस्काराभावेनावस्थान्तरे स्मरणरूपपरामर्शानुपपत्तेस्तदनुकूलमुपाधिविशेषं कल्पयति, अज्ञानवृत्तिभिरिति । अन्तःकरणादेरप्यज्ञानकार्य्यत्वेन तदात्मकत्वात् तदभिप्रायोऽज्ञानशब्दो माभूदिति विशिनष्टि, अतिसूक्ष्माभिरिति । दुर्लक्ष्यत्वम्—अतिसूक्ष्मत्वम् ; तासां वृत्तीनां जड़त्वात्कथं ताभिरानन्दाद्यनुभव इत्यत आह, चैतन्येति । चैतन्यव्याप्ताभिरित्यर्थः । तथा च वृत्तिविनाशात् तद्विशिष्टचैतन्यस्यापि विनाशात्संस्कारजन्यं स्मरणमवस्थान्तरे

"आनन्दभुक् चेतो मुखः प्राज्ञः" [माण्डु० ५ मन्त्रः] इत्यादिश्रुतेः, सुखमहमस्वाप्सं न किञ्चिदवेदिषमित्युत्थितस्य परामर्शोपपत्तेश्च ॥ ४७ ॥

अनयोः समष्टिव्यष्ट्योर्वनवृक्षयोरिव जलाशयजलयोरिव चाभेदः ॥ ४८ ॥

एतदुपहितयोरीश्वरप्राज्ञयोरपि वनवृक्षावच्छिन्नाकाशयोरिव जलाशयजलगतप्रतिविम्बा-

---

अत्रैव उपष्टम्भकत्वेन श्रुतिमवतारयति,—आनन्दभुगिति।

उत्तरकालीनसुखपरामर्शोपपत्तिरपि पूर्वानुभूतसुखबाहुल्यानुभवसद्भावे प्रमाणमित्याह, सुखमहमिति।—सुखमहमस्वाप्समित्यानन्दपरामर्शः, न किञ्चिदवेदिषमिति अज्ञानपरामर्शः; तथा च सुषुप्तिदशायां प्रलयकाले च प्राज्ञेश्वरौ अज्ञानवृत्तिभिः आनन्दमनुभवत एव इत्यर्थः ॥ ४७ ॥ सु०।

इदानीम् ईश्वरगतमूलाज्ञानस्य जीवगतसंस्कारमात्रावशिष्टाज्ञानस्य च समष्टिव्यष्ट्यभिप्रायेण भेदभानेऽपि वस्तुतो भेदो नास्तीत्येतत् सदृष्टान्तमाह, अनयोरिति ॥ ४८ ॥ सु०।

उक्तोपाधिद्वयद्वारेण ईश्वरप्राज्ञयोरपि अभेदं दृष्टान्तमुखेन दर्शयति, एतदुपहितयोरिति।—ईश्वरस्य वनावच्छिन्नाकाशवत्

---

सम्भवतीति भावः। तत्र प्रमाणमाह—आनन्दभुगिति। चेतोमुखश्चैतन्यदीप्ताज्ञानवृत्तिप्रधानः। आदिशब्दात्—"सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति" [कैवल्योपनिषद् १ खण्ड० १३ मन्त्रः] इत्यादिश्रुत्यन्तरग्रहः। तत्रैवानुभवमपि प्रमाणयति, सुखमिति। न चायं सुखपरामर्शो दुःखाभावविषयस्तस्य तदाननुभूतत्वात् तदनुभवसामग्र्याश्च निरूपयितुमशक्यत्वात्। विस्तृतं चैतद्वृद्धैरित्युपरम्यते सङ्ग्रहाधिकारात्। उक्तोपाध्योस्तदुपहितयोश्च प्राक् सिद्धवत् कृतमभेदं विशदयति, अनयोरिति ॥ ४७। ४८॥ विद्व०।

काशयोरिव चाभेदः। "एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्य्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्" [माण्डु० ६ मन्त्रः] इत्यादिश्रुतेः॥४८॥

वनवृक्षतदवच्छिन्नाकाशयोर्जलाशयजलगत-प्रतिबिम्बाकाशयोर्वा आधारभूतानुपहिताकाश-वदनयोरज्ञानतदुपहितचैतन्ययोराधारभूतं यद-

प्राज्ञस्य वृक्षावच्छिन्नाकाशवच्च, तथा स्थूलजलाशयोपाध्यव-च्छिन्नाकाशवत् तद्गतप्रतिबिम्बाकाशवच्च कारणोपाध्यवच्छिन्ने-श्वरस्य कार्य्योपाध्यवच्छिन्नप्राज्ञस्य च वस्तुतोऽभेद एवेत्यर्थः। तत्र प्रमाणमाह, एष इति। तथा चोक्तमाचार्य्यैः,—"कार्य्योपाधिरयं जीवः कारणोपाधिरीश्वरः। कार्य्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते॥" इति [अनु० प्रका० १०।६१]॥ ४८॥ सु०।

उपाधिद्वयावच्छिन्नौ प्राज्ञेश्वरौ सप्रपञ्चं निरूप्य इदानीम् अनवच्छिन्नं तुरीयं यत् चैतन्यं तत् लक्षयति, वनवृक्षेत्यादि।—यथा स्थूलवनोपाध्यवच्छिन्नाकाशापेक्षया सूक्ष्मवृक्षोपाध्य-वच्छिन्नाकाशापेक्षया च महाकाशस्य तदुभयाधारतया अनव-च्छिन्नत्वाच्च तुरीयत्वं, तथा कार्य्यकारणोपाधितदवच्छिन्नचैतन्य-द्वयापेक्षया तदाधारभूतं यदनवच्छिन्नं सर्वव्यापि चैतन्यं

प्राज्ञेश्वरयोरभेदे श्रुतिं प्रमाणयति, एष सर्वेश्वर इति। आदिपदात् "अथ य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" [छान्दो० ८ अध्या० ३ खण्ड० ४ मन्त्रः] इत्यादिश्रुत्यन्तरग्रहः॥ ४८॥ विद्व०।

प्राज्ञेश्वरात्मकस्य चैतन्यस्योपहितत्वेऽनुपहितं चैतन्यमन्यदेवेत्यर्थादुक्तेः किं तदित्य-पेक्षायां तत् स्वरूपसंज्ञे दर्शयति, वन इति। आधारश्चासावनुपहितश्चासावाकाशश्च स तथा तद्वदिति यावत्। यद्यप्याकाशस्य वनाश्रयत्वं जलाशयाश्रयत्वं वा नास्ति

नुपहितं चैतन्यं तत् तुरीयमित्युच्यते। "शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः" [माण्डु० ७ मन्त्रः] इत्यादिश्रुतेः॥ ५०॥

इदमेव तुरीयं शुद्धचैतन्यमज्ञानादितदुपहितचैतन्याभ्यां तप्तायःपिण्डवदविविक्तं सन्महावाक्यस्य वाच्यं, विविक्तं सल्लक्ष्यमिति चोच्यते॥५१॥

---

विशुद्धं तुरीयमुच्यते इत्यर्थः। अस्य चैतन्यस्य तुरीयत्वं वक्ष्यमाणविश्वाद्यपेक्षयेति द्रष्टव्यम्।

अस्मिन्नर्थे श्रुतिं संवादयति, शान्तमिति। आदिपदात्— "त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत्। तेभ्यो विलक्षणः साक्षीचिन्मात्रोऽहं सदाशिवः॥" [कैव० १ खण्ड० १८ मन्त्रः] इत्यादि श्रुत्यन्तरग्रहः॥ ५०॥ सु०।

एतदेव विशुद्धचैतन्यं तदेव पूर्वोक्तचैतन्यद्वयेन सह ऐक्यविवक्षायां महावाक्यस्य वाच्यत्वं लभते, भेदविवक्षायाञ्च लक्ष्यत्वं लभते इत्याह, इदमेवेति।—त्रयाणां चैतन्यानां चैतन्येन रूपेण एकत्वेऽपि अवच्छिन्नानवच्छिन्नत्वेन रूपेण वाच्यलक्ष्यत्वे सम्भवत इति भावः॥ ५१॥ सु०।

---

तदनारम्भकत्वात् तथाप्यवकाशमन्तरेण तयोः स्थित्यनुपपत्तेस्तदाधारत्ववचनमिति द्रष्टव्यम्। अस्य चैतन्यस्य तुरीयत्वं वक्ष्यमाणविश्वाद्यपेक्षयेति द्रष्टव्यम्। तत्र प्रमाणमाह, शान्तमिति। आदिपदात्—"त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत्। तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः॥" [कैव० उप० १ खण्ड० १८ मन्त्रः] इत्यादिश्रुत्यन्तरग्रहः॥ ५०॥ विद्व०।

अध्यारोपेण व्यासक्तचित्ततया प्रकरणार्थविस्मरणं माभूदिति प्रसङ्गात् तमाह, इदमेवेति॥ ५१॥ विद्व०।

अस्याज्ञानस्यावरणविक्षेपनामकमस्ति शक्तिद्वयम् ॥ ५२ ॥

आवरणशक्तिस्तावदल्पोऽपि मेघोऽनेकयोजनाऽऽयतमादित्यमण्डलमवलोकयितृनयनपथपिधायकतया यथाऽऽच्छादयतीव, तथाऽज्ञानं परि-

---

अथ इदानीं स्वप्रकाशचिद्रूपस्य आत्मनः कथं कुण्ठितप्रकाशत्वं, कथं वा असङ्गोदासीनस्य आत्मनः आकाशादिप्रपञ्चजनकत्वम्? इत्येतन्महाविरोधपरिहारायाज्ञानस्य शक्तिद्वयं निरूपयति,—अस्य अज्ञानस्येति।

ते एव नामतो निर्दिशति, आवरणविक्षेपनामकमिति।—सच्चिदानन्दस्वरूपमावृणोतीति आवरणशक्तिः। ब्रह्मादिस्थावरान्तं जगत् जलबुद्बुदवन्नामरूपात्मकं विक्षिपति सृजतीति विक्षेपशक्तिः, इति शक्तिद्वयमज्ञानस्येत्यर्थः ॥ ५२ ॥ सु०।

ननु अपरिच्छिन्नस्य स्वप्रकाशचिद्रूपाखण्डपरिपूर्णस्वरूपस्यात्मनः, परिच्छिन्नेन अनित्येन जड़तमोरूपेण अव्यापकेन अज्ञानशक्तिविशेषेण कथम् आवरणम्? इत्याशङ्क्य वस्तुतोऽज्ञानस्य आत्माच्छादकत्वाभावेऽपि प्रमातृबुद्धिमात्राच्छादकत्वेन अज्ञानस्य आत्माच्छादकत्वमुपचारादुच्यते इत्याह,आवरणशक्तिस्तावदिति।—यथा अत्यल्पोऽपि मेघोऽनेकयोजनविस्तीर्णम् आदित्यमण्डलमवलोकयितृपुरुषदृष्टिमात्राच्छादकत्वेन आच्छादयति

---

एवमवस्थाभिमानिसहितमज्ञानं सविभागं सप्रपञ्चं निरूप्येदानीं तत्कार्याध्यारोपं क्रमेण निरूपयिष्यंस्तदुपयोगित्वेनाज्ञानगतं सामर्थ्यं तावन्निरूपयति, अस्याज्ञानस्य इति ॥ ५२ ॥ विद्व०।

तत्रावरणशक्तिं सदृष्टान्तामुपपादयति, आवरणेति। यद्यप्यज्ञानस्य मूर्त्तत्वामूर्त्तत्वाभ्यामनिर्वाच्यत्वान्न परिच्छिन्नत्वं, तथापि परिच्छेद्यापेक्षया अल्पत्वमात्रं विवक्षित-

च्छिन्नमप्यात्मानमपरिच्छिन्नमसंसारिणमवलोक-
यितृबुद्धिपिधायकतयाऽऽच्छादयतीव तादृशं
सामर्थ्यम्। तदुक्तं—"घनच्छन्नदृष्टिर्घनच्छन्नमर्कं
यथा निष्प्रभं मन्यते चातिमूढः। तथा बद्धवद्भाति
यो मूढदृष्टेः स नित्योपलब्धिस्वरूपोऽहमात्मा॥"
इत्यादि [ हस्ता० १० श्लोकः ] ॥ ५३ ॥

अनयैवावरणशक्त्यावच्छिन्नस्यात्मनः कर्तृत्व-
भोक्तृत्वसुखित्वदुःखित्वादि-मोहात्मकतुच्छसंसार-
भावनाऽपि सम्भाव्यते, यथा स्वाज्ञानेन आवृ-
तायां रज्ज्वां सर्पत्वसम्भावना ॥ ५४ ॥

---

इत्युपचर्य्यते, तथा अज्ञानम् अतितुच्छं परिच्छिन्नमपि अपरि-
च्छिन्नमात्मानम् असंसारिणम् अवलोकयितृबुद्धिपिधायकत्वेन
आच्छादयति इत्युपचारादुच्यते इत्यर्थः।

अस्मिन्नर्थे वृद्धसम्मतिमाह, तदुक्तमित्यादि।—इयमेवाव-
रणशक्तिरात्मनो भेदबुद्धिजनकत्वेन संसारहेतुरिति भावः॥
५३॥ सु०।

अत्रानुरूपं दृष्टान्तमाह,—यथा स्वाज्ञानेनेति॥ ५४॥ सु०।

---

मिति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यम्। बुद्धिपिधायकतयेत्यत्र बुद्धिशब्देन तदनुरक्तं
चैतन्यं लक्ष्यते, बुद्धेरज्ञानकार्य्यत्वेन तदावृतत्वानुपपत्तेः। निरूपितेऽर्थे हस्ता-
मलकाचार्य्यसम्मतिमाह, तदुक्तमित्यादिना॥ ५३॥ विद्व०।

उक्तामावरणशक्तिं तत्कार्य्यद्वारा बुद्धिमारोहयति, अनयेति। अधिष्ठानस्वरूप-
विशेषावरणवशेन विपरीतार्थसम्भावना भवतीत्यत्र दृष्टान्तमाह, यथा स्वाज्ञानेति
॥ ५४॥ विद्व०।

विक्षेपशक्तिस्तु—यथा रज्ज्वज्ञानं स्वावृतरज्जौ स्वशक्त्या सर्पादिकमुद्भावयति, एवमज्ञानमपि स्वावृतात्मनि विक्षेपशक्त्या आकाशादिप्रपञ्चमुद्भावयति तादृशं सामर्थ्यम्। तदुक्तम् "विक्षेपशक्तिर्लिङ्गादिब्रह्माण्डान्तं जगत् सृजेत्" [ वाक्यसुधा १३ ] इति ॥ ५५ ॥

शक्तिद्वयवदज्ञानोपहितं चैतन्यं स्वप्रधान-

---

यदुक्तमसङ्गोदासीनस्य आत्मनः कथं जगत्कारणत्वम् ? इति तन्निराकर्त्तुं विक्षेपशक्तिस्वरूपमाह, विक्षेपशक्तिस्त्विति।—यथा रज्जुविषयकमज्ञानं सर्पमुत्पादयति, तथा आत्मविषयकमज्ञानमपि स्वावच्छिन्ने आत्मनि विक्षेपशक्तिप्रभावेण आकाशादिप्रपञ्चमुद्भावयत्युत्पादयतीत्यर्थः। अस्मिन्नर्थे ग्रन्थान्तर सम्मतिं दर्शयति, तदुक्तमिति ॥ ५५ ॥ सु०।

ननु किमात्मा चराचरात्मकप्रपञ्चस्य निमित्तकारणम्, उपादानकारणं वा ? नाद्यः, दण्डादिवत् स्वकार्य्यव्यापित्वं न स्यात् आत्मनः "तत्सृष्ट्वा तदेवानुप्राविशत्" [ तैत्ति० उप० २ वल्ली ६ अनु० ] इतिश्रुत्या स्वकार्य्यव्यापित्वश्रवणात् ; नापि द्वितीयः, अचेतनस्य जड़स्य प्रपञ्चस्य चैतन्योपादानकत्वासम्भ-

---

विक्षेपशक्तिं सदृष्टान्तामाह, विक्षेपेति। अत्राप्याचार्य्यान्तरसम्मतिमाह, विक्षेपेति। आवरणविक्षेपशक्तिद्वयविशिष्टमज्ञानं कूटस्थासङ्गाद्वय-चैतन्यात्मनो जगत्कारणत्वोपाधिरिति भावः। तदुक्तमभियुक्तैः,—"आच्छाद्य विक्षिपति संस्फुरदात्मरूपं जीवेश्वरत्वजगदाकृतिभिर्मृषैव। अज्ञानमावरणविभ्रमशक्तियोगादात्मत्वमात्रविषयाश्रयतावलेन" इति [ संक्षेपशारीरकम् १।२० ] ॥ ५५ ॥ विद्व०।

नन्वेवंविधाज्ञानोपाधिकस्येश्वरचैतन्यस्य यज्जगत्कारणत्वं तन्निमित्तत्वं स्यादुपादा-

तथा निमित्तं स्वोपाधिप्रधानतयोपादानञ्च

वात्। उपादानत्वेन च कार्य्यकारणयोः अभेदेन प्रपञ्चस्यापि चैतन्यरूपत्वप्रसङ्गात् अनित्यत्वं न स्यादित्याशङ्क्य जड़प्रपञ्चं प्रति आत्मनश्चैतन्यप्राधान्येन निमित्तत्वं स्वाज्ञानप्राधान्येन उपादानत्वञ्च सम्भवतीत्याह, शक्तिद्वयवदिति।—यथा अयस्कान्तसन्निधाने जड़मयमपि लौहं चेष्टते, तथा चैतन्यसन्निधाने जड़मयमज्ञानं चेष्टते इति अज्ञानविकारं प्रति चैतन्यस्य निमित्तत्वम्; जड़ाकाशादिकार्य्यं प्रति मायायाः साक्षादुपादानत्वेन मायाविन ईश्वरस्यापि परम्परया उपचारादुपादानत्वं न विरुध्यते इत्यर्थः। यदुक्तं चैतन्यस्य निमित्तकारणत्वे कार्य्यानुप्रवेशो न स्यादिति, तन्न; कारणस्य कार्य्यानुप्रवेशनियमस्य उपादानकारणत्वविषयत्वेन निमित्तकारणविषयत्वाभावात्। तत्सृष्ट्वा" [ तैत्ति० उप० २ वल्ली ६ अनु० ] इत्यादिश्रुतेरप्युपादानकारणपरत्वात्। यद्यपि उक्तमात्मन उपादानकारणत्वे प्रपञ्चस्यानित्यत्वं न स्यादिति, तदपि न, तस्य परिणामविषयत्वेन विवर्त्तविषयत्वाभावात् प्रपञ्चस्य ब्रह्मविवर्त्तत्वात्; विवर्त्तत्वञ्च स्वस्वरूपापरित्यागेन स्वरूपान्तरप्रदर्शकत्वम्; यथा रज्ज्ववच्छिन्नचैतन्यनिष्ठाज्ञानस्य रज्जुस्वरूपापरित्यागेन सर्पादिस्वरूपान्तरप्रदर्शकत्वं, तथेश्वरचैतन्यनिष्ठाज्ञानशक्तेरपि चैतन्यस्वरूपापरित्यागेन आकाशादिस्वरूपान्तराकारेण प्रदर्शकत्वम्। एतावता आकाशादिप्रपञ्चस्य नित्यत्वं न सम्भवति, अज्ञानस्य मिथ्यारूपत्वेन तज्जन्याकाशादिप्रपञ्चस्यापि मिथ्यात्वात्। न चैवमज्ञानस्य मिथ्यात्वे तत्प्रयुक्तबन्धमोक्षयोरपि मिथ्यात्वप्रसङ्ग इति वाच्यम्,

नत्वं वोभयं वा? इति जिज्ञासायामाह, शक्तिद्वयवत् इति। स्वप्रधानतया कूटस्थचैतन्यस्वरूपावभासितया। स्वोपाधिप्रधानतया उपाध्युपरक्तसत्तास्फूर्त्तिरूपतयेति भेदः।

भवति ; यथा लूता तन्तुकार्य्यं प्रति स्वप्रधानतया निमित्तं, स्वशरीरप्रधानतयोपादानञ्च भवति ॥ ५६ ॥

---

इष्टापत्तेः । तदुक्तं भागवते,—"बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः । गुणस्य मायामूलत्वात् न मे मोक्षो न बन्धनम् ॥" [ ११ स्क० ११ अ० १ श्लोकः ] इति । अलमतिविस्तरेण ।

एकस्यैवात्मनो निमित्तकारणत्वे उपादानकारणत्वे च दृष्टान्तमाह, यथा लूतेति ।—यथा लूता जन्तुः स्वोत्पाद्यमानं तन्तुलक्षणं कार्य्यं प्रति स्वचैतन्यप्रधानतया निमित्तं, चैतन्यसन्निधानव्यतिरेकेण जड़स्य देहस्य मृतदेहवत् तन्तुजनकत्वासम्भवात् स्वशरीरप्राधान्येन उपादानञ्च भवति, अशरीरस्य साक्षात् तन्तुजनकत्वासम्भवात्, शरीरस्य साक्षात् तन्तूपादानत्वेन तदवच्छिन्नचैतन्यस्यापि उपादानत्वेनोपचारात्, एवम् ईश्वरस्यापि स्वचैतन्यप्रधानतया निमित्तत्वं स्वोपाधिप्रधानतया उपादानत्वञ्च भवतीत्यर्थः ॥ ५६ ॥ सु० ।

---

एकस्योभयविधकारणात्मकत्वे दृष्टान्तमाह, यथेति । लूतोर्णनाभिः । तन्तुरिव कार्य्यं तन्तुकार्य्यम् । यथा लूता तन्तुनिर्माणे प्रसिद्धकार्पासतूलकाष्ठयन्त्रादिसहायमनपेक्ष्यैव तन्तूनातानवितानात्मकञ्च तत्कार्य्यं जालरूपं सृजति, एवमीश्वरः प्राक्सृष्टेरेक एवाद्वितीयोऽसहाय एव स्वमायाशक्त्याविशमावेण लिङ्गादिब्रह्माण्डान्तं जगत्सृजतीति भावः । तथा च श्रुतिः,—"यत्तदद्रेश्यमग्राह्यम्" [ मुण्ड० १ मुण्ड० १ खण्ड० ६मन्त्रः ] इत्युपक्रम्य "यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति । यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्सम्भवतीह विश्वम् ॥" [ मुण्ड० १ मुण्ड० १ खण्ड० ७ मन्त्रः ] इति । न्यायोऽपि,—"प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" [ ब्रह्म० सू० १ अध्या० ४ पा० २३ सूत्र० ] इति ॥ ५६ ॥ विद्व० ।

तमःप्रधानविक्षेपशक्तिमदज्ञानोपहितचैतन्यादाकाशः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी चोत्पद्यते। "तस्माद्वा एतस्मादा-

इदानीं विक्षेपशक्तिकार्य्यमाह, तमःप्रधानेति। आकाशादेर्जड़त्वात् तमोगुणप्रधानविक्षेपशक्तियुक्ताज्ञानावच्छिन्नचैतन्यस्यैव आकाशादिप्रपञ्चजनकत्वमिति भावः।

अस्मिन्नर्थे श्रुतिं प्रमाणयति, तस्मादित्यादि। एतेन अर्थात् साङ्ख्यनैयायिकपक्षौ निरस्तौ, शक्तेरज्ञानस्य शक्तिमत्परतन्त्रत्वात्। स्वतन्त्रस्य तस्य केवलस्य जड़स्य अज्ञानस्य जगत्कारण-

तदेवं चैतन्यस्य जगत्कारणत्वं प्रपञ्च्य ततः कार्य्योत्पत्तिक्रमं दर्शयति, तमःप्रधान इति। तमसः प्राधान्यनिर्देशाद्रजःसत्त्वयोरपि तत्र मात्रया स्थितिर्द्रष्टव्या। उक्तभूतसृष्टिक्रमे प्रमाणमाह, तस्मादिति। नन्वाकाशं नोत्पद्यते निरवयवद्रव्यत्वादात्मवदिति चेत्, न, उदाहृतश्रुतिबाधितविषयत्वेनानुमानानुत्थानात् प्रत्यनुमानविरोधाच्च। तथा हि,—आकाशमुत्पद्यते महत्त्वे सति भूतत्वान्महापृथिव्यादिवत्। न चाश्रयासिद्धो हेतुराश्रयस्याकाशस्योभयवादिसिद्धत्वात्। न च धर्म्मिग्राहकप्रमाणबाधनिबन्धनाप्याश्रयासिद्धता हेतोः; धर्म्मिग्राहकप्रमाणेन शब्दाश्रयत्वेनाकाशाख्यधर्म्मिमात्रसिद्धावपि तद्गतनित्यत्वादेस्तेनासिद्धेः। न च स्वरूपासिद्धो भूतत्वमहत्त्वयोः पक्षे सम्प्रतिपत्तेः; नापि व्याप्यत्वासिद्धो निरुपाधिकत्वात्। न च मूर्त्तत्वसावयवत्वरूपवत्त्वादेरुपाधित्वं वक्तुं शक्यं, गुणकर्म्मणोः साध्याव्याप्तेः। भूतत्वद्रव्यत्वसामान्यवत्त्वादेश्च साधनव्यापकत्वात्। अथ द्रव्यत्वव्यतिरिक्तावान्तरजातिमत्त्वमुपाधिरिति चेन्न, प्रध्वंसेन साध्याव्याप्तेः, तस्योत्पत्तिमत्त्वेऽपि जात्याश्रयत्वाभावात्। न च साध्यस्योत्पत्तिमत्त्वस्य भावधर्म्मिकत्वान्न प्रध्वंसे प्रसक्तिरिति वाच्यम्, उत्पत्तिमात्रस्यैवाकाशे साध्यत्वात्; अन्यथा विप्रतिपत्त्यविषयाणां द्रव्यत्वादीनां धर्म्मिगतानां साध्यताप्रसङ्ग इत्यनुमानाकौशलमापद्येत। न चान्यः कश्चिदुपाधिरुत्प्रेक्ष्यते। अविभुत्वं त्वाकाशेऽपि वेदान्तिनः समानं "ज्यायानन्तरिक्षात्" [छान्दो० ३ अध्या० १४ खण्ड० ३ मन्त्रः] "येनावृतं खं च दिवम्" इत्यादावात्मापेक्षयाकाशस्य न्यूनपरिमाणत्वश्रवणात्। अतो न तं प्रति तस्योपाधित्वम्। नापि विरुद्धः साध्यविपर्य्ययाव्याप्तेः। नापि साधारणा-

त्मन आकाशः सम्भूतः" [ तैत्ति० उप० २ वल्ली० १ अनु० ] इत्यादिश्रुतेः" ॥ ५७ ॥

---

त्वानुपपत्तेः, "ईक्षतेर्नाशब्दम्," [ ब्रह्म० सू० १ अध्या० १ पा० ५ सूत्रः ] "रचनानुपपत्तेश्च नानुमानम्" [ब्रह्म० सू० २ अध्या० २ पा० १ सूत्र० ] इत्यादिन्यायनिरस्तत्वाच्च। परमाणोरपि उक्तदोषग्रासत्वासानपायात्, अभिन्ननिमित्तोपादानप्रतिपादक-श्रुति-स्मृति-न्यायविरोधाच्च। "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति" [ तैत्ति० उप० ३ वल्ली १ अनु० ] "सदेव सौम्येदमग्र आसीत्," [ छान्दो० उप० ६ अध्या० २ खण्ड० १मन्त्रः ] "एतस्माज्जायते प्राणो मनःसर्वेन्द्रियाणि च" [ मुण्ड० २ मुण्ड० १ खण्ड० ३ मन्त्रः ] "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते" [ भगवद्-गीता १० अध्या० ८ श्लोकः ]। "वीजं मां सर्वभूतानाम्" [ भगवद्गीता० ७ अध्या० १० श्लोक० ] इत्यादिश्रुतिस्मृतिभि-रीश्वरस्यैव जगत्कारणत्वप्रतिपादनात् ॥ ५७ ॥ सु० ।

---

नैकान्तिको विपक्षाप्रवेशात्। नाप्यसाधारणः सपक्षगामित्वात्। नापि कालातीतो बाधकप्रमाणानिरूपणात्। न चोक्तानुमानं बाधकमिति वाच्यं, तस्य नरशिरःकपाल-शुद्धतानुमानवदागमबाधितविषयत्वस्योक्तत्वात्। न च श्रुतेराकाशाभिव्यक्तिमात्रार्थत्वा-न्नोत्पत्त्यर्थतेति वाच्यम्; सिद्धे चानुमानस्याबाधितविषयत्वेन प्रामाण्ये श्रुतेरन्यार्थत्व-सिद्धिः तत् सिद्धावितरसिद्धिरितीतरेतराश्रयात्। किञ्च,—"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" [ तैत्ति० २ वल्ली० १ अनु० ] इति सकृच्छ्रुतः सम्भूतशब्द आकाशे साक्षात् सम्बध्यमानो गौणः, स एव वाय्वादावनुषज्यमानो मुख्य इति, महदिदं व्याख्यानकौशलं तार्किकपशोः। नापि सन्दिग्धानैकान्तिकता विपक्षव्यावृत्तेः स्फुटत्वात्। नापि प्रकरणसमता त्वदनुमानस्य दुर्बलत्वेनोभयोः समानबलवत्त्वाभावात्। निरवयवद्रव्यत्वस्य विनश्यदवस्थापन्ने पटे व्यभिचारात्। अवयवत्वात्यन्ताभावाधिकरणत्वं निरवयवशब्देन विवक्षितमिति चेन्न; अवयवशब्देन प्रदेशविवक्षायां सर्व्वस्याप्यवयवि-

प्रदेशस्य अवयवत्वेनोपक्षीणत्वादवयव्यभावप्रसङ्गात्। आश्रयविवक्षायामन्यतरासिद्धो हेतु: स्यादाकाशाश्रयस्य ब्रह्मणो समिष्टत्वात्। तस्मात्त्वदनुमानं न प्रतिपक्ष:। नापि प्रतिपक्षान्तरमुत्प्रेक्ष्यते। तस्मादनुमानेनाप्याकाशोत्पत्ति: सम्भावितत्वात्कुष्कतर्कश्रद्धामनादृत्य श्रुत्युक्तमेवाकाशजन्मेतरजन्मवच्छ्रद्धेयम्। अभ्युपगम्य चेदं परमाणूनामनुत्पत्तिमत्त्व महत्त्वे सतीति हेतुर्विशेषित:। तदनभ्युपगमे तु भूतत्वादित्येव हेतु:। तथा हि चतुर्विधा: परमाणव उत्पद्यन्ते मूर्त्तत्वाद्भूतत्वाद्वा घटादिवत्। न च मनसि मूर्त्तत्वहेतोरनैकान्तिकता तस्यापि पक्षतुल्यत्वात्। न च धर्म्मिग्राहकप्रमाणबाध: सिद्धेऽपि तेन धर्म्मिस्वरूपे तद्गतनित्यत्वादेरसिद्धे:। न च परमाणूनामपि कार्य्यत्वे कारणानवस्थानान्न किमपि मूलकारणं जगत: स्यादिति वाच्यं, ब्रह्मण एव जगन्मूलकारणस्य श्रुतिस्मृतीतिहासपुराणप्रसिद्धत्वात्। तथा दिक्कालावुत्पत्तिमन्तावचेतनभावत्वात्पटवत्। न चास्माकमविद्यायां व्यभिचार:, तस्या भावाभावविलक्षणत्वाभ्युपगमात्। अन्येऽपि हेत्वाभासा: पूर्व्ववदुद्धरणीया:। न च सामान्यविशेषसमवायेषु व्यभिचार:, तत्र सामान्यस्य विचार्य्यमाणे ब्रह्मस्वरूपानतिरेकादचेतनत्वहेतोस्तत्राप्रवृत्ते:। तथा हि विशेषास्तावत्सामान्ये कल्पिता इति त्वविद्यावादे निरूपितम्। तथा च द्रव्यत्वादीनां सामान्यविशेषाणां सामान्यभावरूपतायां सत्तायामन्तर्भाव:। सत्ताया अपि स्फुरणविरहिताया: क्वाप्यनुपलम्भात् स्फुरणभावत्वं युक्तम्। स्फुरणं च ब्रह्मैव "सदेव सोम्येदं" [ छान्दो० ६अध्या० २खण्ड० १मन्त्र:] "सत्यं ज्ञानं" [ तैत्ति० उप० २वल्ली० १ अनु० ] इत्यादिश्रुते:। "ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद" [ बृह० उप० २ अध्या० ४ ब्रा० ६ मन्त्र: ] इत्यादौ परब्रह्मस्वरूपातिरिक्तत्वेन ब्राह्मणादिजातिं विजानतो निन्दाश्रवणाच्च। तस्मान्न सामान्ये व्यभिचार:। विशेषसमवायौ तु खपुष्पकल्पौ। अनयोर्यथा खपुष्पकल्पत्वं तथा चिदानन्दलहरीटीकायां प्रपञ्चितमस्माभिरितीहोपरम्यते। श्रुतयश्च भवन्ति प्रत्यनुमानबाधिका:। "अणोरणीयान्" [ तैत्ति० आर० १०।१०।१ ] इति हि परमाणोरणीय: परमकारणं ब्रह्म दर्शयित्वा "यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्" [ तैत्ति० आर० १०।१०।३ ] इति तैत्तिरीयश्रुतिस्तद्व्यतिरिक्तमणुमहच्चाविशेषेण प्रतिषेधति। "असतोऽधि मनोऽसृज्यत" [तैत्ति० ब्रा० २।२।९।१०] "एतस्माज्जायते प्राणो मन: सर्वेन्द्रियाणि च" [ मुण्ड० २मुण्ड० १खण्ड० ३मन्त्र: ] इति च तैत्तिरीयाथर्वणश्रुती मनस उत्पत्तिं स्पष्टमाचचाते। तथा "ज्ञ: कालकालो गुणी सर्व्वविद्य:" [ श्वेता० उप० ६ अध्या० २ मन्त्र: ] "सर्वे निमेषा जज्ञिरे" [ तैत्ति० आर० १०। १। २ ] इति च श्वेताश्वतरतैत्तिरीयश्रुती कालस्यापि कार्य्यतामावेदयत:। "पुरुष एवेदं सर्वम्" [ ऋग्वेद०

तेषु जाड्याधिक्यदर्शनात् तमः प्राधान्यं तत्-कारणस्य ॥ ५८ ॥

ननु आकाशादिप्रपञ्चोत्पादकचैतन्यावच्छेदकाज्ञाने कुत-

८ अष्ट० ४अध्या० १७ वर्ग० २ऋक् ] इत्युपक्रम्य "दिशः श्रोत्रात्" [ ऋग्वेद० ८अष्ट० ४ अध्या० १९ वर्ग० १४ ऋक् ] इति पुरुषसूक्तात्मिका श्रुतिर्दिशां पुरुषविकारत्वं सूचयति ; वस्तुतस्तु प्राच्यादिव्यपदेशस्य आदित्यगत्युपाधिना नभस्येव कल्पितत्वान्नाकाशातिरिक्ता दिगस्तीति गमयितव्यम्। न च ब्रह्माप्युत्पद्यते कारणत्वात् आकाशवदिति वाच्यम्, "अजो नित्यः" [ कठ० उप० २ अ० १८ मन्त्रः ] इत्यादिश्रुतिविरोधात्, "असम्भवस्तु सतोऽनुपपत्तेः" [ ब्रह्म० सू० २ अध्या० ३ पा० ९सूत्र० ] इति न्यायविरोधाच्च। एतेन जगदुत्पत्तिप्राक्काले ब्रह्मातिरिक्तं वस्तु नास्तीति दर्शितम्। अविद्यायाश्चात्मशक्तित्वेन ततः पार्थगर्थ्यायोगाज्जीवानाञ्च तदा परमात्मनि सम्पन्नत्वात् तददृष्टानाञ्च तदुपाध्यन्तःकरणनिष्ठानां तत्संस्काराविशेषाविद्यामात्रत्वेन पृथक्सत्त्वाभावात्। विस्तृतं चैतदाचार्य्यैर्वियदधिकरणादाविति विश्रम्यते। "आकाशाद्वायुर्वायोरग्निः" [ तैत्ति० उप० २ वल्ली० १ अनु० ] इत्यादावाकाशादिभावमापन्नादविद्यासहायाद्ब्रह्मण एव वायुादीनामुत्पत्तिरिति द्रष्टव्यम्। "तत्तेजोऽसृजत तत्तेज ऐचत" [छान्दो० ६अध्या० २खण्ड० ३मन्त्रः] इत्यादिश्रुत्यन्तरे तेजःप्रभृतेरपीक्षणपूर्व्वकमबादिसष्टृत्वश्रवणात्। अचेतनस्य च ईक्षणानुपपत्तेः। न्यायोऽपि "तदभिध्यानादेव तु तल्लिङ्गात्सः" [ ब्रह्म० सू० २ अध्या० ३ पा० १३ सूत्र: ] इतीममेवार्थं निर्णयति। एतेन प्रधानाद्यादिवादा निरस्ता वेदितव्याः, तेषां श्रुतिविरुद्धत्वान्न्यायविरुद्धत्वाच्च। न ह्यचेतनं चेतनानधिष्ठितं किञ्चित्कुर्वदुपपद्यते रथशकटादावदर्शनात्। अतो न प्रधानवाद आश्रयणीयः। यथा परमाणुवादोऽपि। अण्वोर्द्वयोः संयोगस्याव्याप्यवृत्तित्वे तयोः सावयवतापत्तेरनित्यत्वप्रसङ्गः। तत्संयोगस्य व्याप्यवृत्तित्वे निरवयवयोरण्वोरेकस्मिन्नितरस्य सम्मितत्वात्प्रथिमानुपपत्तिस्तथा च तत्कार्य्यस्य द्व्यणुकस्यापि परिमण्डलत्वप्रसङ्गः। किञ्च, द्व्यणुकारम्भसमये परमाणू कथञ्चिद्विक्रियेते न वा? आद्येऽनित्यत्वादिदोषापत्तिर्मृत्पिण्डादिवत्। द्वितीये परमाणुसमूह एव द्व्यणुकादिकार्य्यं स्यात्तृणतूलवत्। इत्यलं प्रपञ्चेन प्रकृतमनुसरामः॥ ५७ ॥ विद्व०।

तमःप्रधानविक्षेपशक्तिमदज्ञानोपहितं चैतन्यमाकाशादिकारणमित्युक्तं तत्कथमव-

तदानीं सत्त्वरजस्तमांसि कारणगुणप्रक्रमेण तेषु आकाशादिषु उत्पद्यन्ते ॥ ५९ ॥

इमानि एव सूक्ष्मभूतानि तन्मात्राणि अपञ्चीकृतानि चोच्यन्ते ॥ ६० ॥

---

स्तमः प्राधान्यम्? इत्याशङ्क्याह, तेषु जाड्येति।—"कारणगुणा हि कार्य्यगुणानारभन्ते" इति न्यायादिति भावः ॥ ५८ ॥ सु० ।

ननु त्रिगुणात्मकत्वादज्ञानस्य कथं तमोगुणमात्रप्राधान्येन आकाशादिजनकत्वम्? इत्याशङ्क्याह, तदानीमिति। तस्यामुत्पत्तिवेलायां सत्त्वादयस्त्रयोऽपि गुणास्तारतम्येन कारणगुणप्रक्रमन्यायेन तेषु आकाशादिषु पञ्चभूतेषु उत्तरोत्तराधिक्येन जायन्ते इत्यर्थः ॥ ५९ ॥ सु० ।

इमान्येव सूक्ष्मशरीरादिकारणभूतानि अपञ्चीकृतानि, सूक्ष्मरूपपञ्चभूततन्मात्राणीत्युच्यन्ते इत्याह, इमान्येवेति॥६०॥सु० ।

---

गम्यते भूतकारणाज्ञाने तमःप्राधान्यमिति तत्राह, तेषु च इति। जाड्याधिक्यदर्शनात् इत्यत्राधिक्यशब्दं प्रयुञ्जानः सत्तास्फूर्त्तिपदत्वेन कार्य्येषु चैतन्यस्यापीषदनुवृत्तिं सूचयति। तथा चाहुस्तत्त्वदर्शिनः,—"अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्। आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥" इति। [ वाक्यसुधा २० श्लोकः ] वसिष्ठोऽप्याह,—"यदस्ति यद्भाति तदात्मरूपं नान्यत्ततो भाति न चान्यदस्ति। स्वभावसंवित्प्रतिभाति केवला ग्राह्यं गृहीतेति मृषा विकल्पः" इति ॥ ५८ ॥ विद्व० ।

उत्पद्यमानेषु आकाशादिषु वक्ष्यमाणकार्य्यानुरूपं गुणत्रयमुपलम्भयति, तदानीमिति। कारणस्याव्याकृतस्य ये गुणाः सत्त्वादयस्तेषां प्रक्रमेण तान् गुणानारभ्य यथाकार्य्यक्रमं सत्त्वादिगुणाः सहैव कार्य्यैस्तेषु उत्पद्यन्त इत्यर्थः ॥ ५९ ॥ विद्व० ।

नन्वव्याकृतात्पञ्चतन्मात्राणि क्रमेण जायन्त इति हि स्मृतीतिहासपुराणेषु प्रसिद्धिः तत्कथमाकाशादेरिहोत्पत्तिराम्नायते? इति तत्राह, इमान्येवेति। इमान्येवाकाशादीनि सूक्ष्मभूतानि व्यवहाराक्षमाणि तन्मात्राणि शब्दादितावन्मात्रैकस्वभावानि अपञ्चीकृतानि परस्परमसंसृष्टानि चेति स्मृत्यादिषु उच्यन्ते महर्षिभिरित्यर्थः ॥ ६० ॥ विद्व० ।

एतेभ्यः सूक्ष्मशरीराणि स्थूलभूतानि चोत्पद्यन्ते ; सूक्ष्मशरीराणि—सप्तदशावयवानि लिङ्गशरीराणि ॥ ६१ ॥

अवयवास्तु—ज्ञानेन्द्रियपञ्चकं बुद्धिमनसी कर्मेन्द्रियपञ्चकं वायुपञ्चकञ्चेति ॥ ६२ ॥

---

तदुक्तम्,—"पञ्चप्राणमनोबुद्धि-दशेन्द्रियसमन्वितम्। अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥" [ आत्मबोधः २६ श्लोकः ७ पृष्ठे ] इति वचनादपि अपञ्चीकृतभूतेभ्यः अपञ्चीकृतसूक्ष्मशरीराणि पञ्चीकृतस्थूलभूतेभ्यः स्थूलशरीराणि चोत्पद्यन्ते इत्याह, एतेभ्य इति ॥ ६१ ॥ सु०।

सूक्ष्मशरीरस्वरूपभूतानवयवानाह, अवयवास्त्विति ॥६२॥ सु०।

---

तदेवं भूताध्यारोपं श्रौतमनुक्रम्यदानीं भौतिकाध्यारोपं प्रतिजानीते एतेभ्य इति। प्रतिज्ञातैकदेशं विवृणोति, सूक्ष्मशरीराणि इति। लिङ्गते ज्ञाप्यते प्रत्यगात्मसद्भाव एभिरिति लिङ्गानि तानि च तानि शरीराणि च शरीरप्रतिष्ठत्वात् शरीरसाधनत्वाद्वा धर्म्मादिद्वारेणेति लिङ्गशरीराणीत्यर्थः। तथा च प्रयोगः,—"विमतानीन्द्रियाणि प्राणाश्च स्वातिरिक्तस्वानुगतचैतन्याधिष्ठानपूर्व्वकप्रवृत्तयोऽचेतनत्वाद्रथादिवत्" इति। श्रुतिश्च भवति,—"प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः" [ वृह० उप० ४ अध्या० ४ब्रा० १८ मन्त्रः ] इति "यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणं" [ छान्दो० ८ अध्या० १२ खण्ड० ४ मन्त्रः ] इत्यादिका च ॥ ६१ ॥ विद्व०।

के पुनः सप्तदशावयवा इति तानाह, अवयवास्तु इति। ननु कथं लिङ्गशरीरं सप्तदशावयवमिति निर्द्धार्य्यते। यावता पुर्य्यष्टकं लिङ्गमाचष्टे सुरेश्वराचार्य्याः पञ्चीकरणवार्त्तिके,—"ज्ञानेन्द्रियाणि पञ्चैव पञ्च कर्मेन्द्रियाणि च। मनो बुद्धिरहङ्कारश्चित्तं चेति चतुष्टयम् ॥ प्राणोऽपानस्तथा व्यान उदानाख्यस्तथैव च। समानश्चेति पञ्चैताः कीर्त्तिताः प्राणवृत्तयः ॥ खं वायुर्ग्न्यम्बुरित्याश्च भूतसूक्ष्माणि पञ्च च। अविद्याकामकर्म्माणि लिङ्गं पुर्य्यष्टकं विदुः ॥" इति। अन्यत्र पुनरप्याहैवं

ज्ञानेन्द्रियाणि—श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि ॥ ६३ ॥

एतान्याकाशादीनां सात्त्विकांशेभ्यो व्यस्तेभ्यः पृथक् पृथक् क्रमेणोत्पद्यन्ते ॥ ६४ ॥

---

सात्त्विकांशादाकाशात् श्रोत्रमुत्पद्यते, सात्त्विकांशाद्वायोः त्वगिन्द्रियं, सात्त्विकांशात्तेजसश्चक्षुः, सात्त्विकांशात् जलात् जिह्वा, सात्त्विकांशायाः पृथिव्याः सकाशाद् घ्राणेन्द्रियञ्चेति क्रमेणोत्पद्यन्ते इत्याह, एतानीति ॥ ६४ ॥ सु० ।

---

वर्णितम् । "भूतसूक्ष्मपञ्चकं कर्मज्ञानेन्द्रियपञ्चकद्वयं चतुर्वृत्तिकमेकमन्तःकरणं पञ्चवृत्तिक एकः प्राणश्चेति सप्तदशावयवाः" इति । अतः कथं निर्णयः ? इति उच्यते ।—न चैतेषां पक्षाणां विकल्पोऽभ्युपेयते वस्तुनि तदयोगान्नापि समुच्चयस्तत्र प्रमाणाभावात्, किन्त्विहोक्तस्य सप्तदशकस्यैव सङ्क्षेपविस्तरभेदेन तथा तथा तत्र तत्र कथनम् । तथाहि,—इहोक्तानां हि सप्तदशानामवयवानां भूतसूक्ष्माणि उपादानानि, तदुपादानं चाविद्या । अतस्तयोपादानोपादेययोरभेदान्न अविद्या भूतसूक्ष्मेभ्यः पृथग्विवक्ष्यते । भूतसूक्ष्माणि च लिङ्गशरीरेभ्यो न पृथगभिप्रेयन्ते । कामकर्म्मणोरपि अन्तःकरणवृत्तित्वेन तदाश्रितत्वेन च तदभेदान्न पार्थगर्थ्यविवक्षा ; अतः पुर्य्यष्टकवार्त्तिकेन न विरोधः । तथा पक्षान्तरेऽपि भूतसूक्ष्माणि तत्कार्य्येभ्यः पृथक्कृत्यान्तःकरणप्राणयोश्च वृत्तिवृत्तिमतोरभेदं गृहीत्वा सप्तदशत्वं निरूपितम् । तथा च "सप्तदशः प्रजापतिः" [ शत० ब्रा० ५ । २ । २ । ३ ] इति श्रुतेः प्रजापतेर्हिरण्यगर्भस्य सप्तदशत्वावगमात् सप्तदशावयवमेव लिङ्गशरीरं मुख्यं ज्ञेयमिति । तदुक्तमभियुक्तैः,—"मुख्यं तु सप्तदशकं प्रथितं हि लिङ्गम्" [ सङ्क्षेपशारीरकम् ३।१९ ] इति ॥ ६२ ॥ विद्व० ।

ज्ञानसाधनानीन्द्रियाणि ज्ञानेन्द्रियाणि श्रोत्रादीनि । तेषां शब्दस्पर्शरूपरसगन्धग्राहकेन्द्रियत्वानि प्रत्येकं यथाक्रमं लक्षणानि ॥ ६३ ॥ विद्व० ।

इन्द्रियाणि आहङ्कारिकाणीति साङ्ख्याः, तान्निराकुर्व्वंस्तेषां भौतिकत्वं कथयति, एतानीति । कारणगुणेनोत्पन्नत्रिगुणानां भूतानां सत्त्वगुणावच्छिन्नेभ्योऽंशेभ्यो गुणोद्रेक कृतभागेभ्यः श्रोत्रादीनि जातानीत्यर्थः ॥ ६४ ॥ विद्व० ।

बुद्धिर्नाम—निश्चयात्मिका अन्तःकरणवृत्तिः। मनो नाम—सङ्कल्प-विकल्पात्मिका अन्तः-करणवृत्तिः ॥ ६५ ॥

अनयोरेव चित्ताहङ्कारयोरन्तर्भावः। अनु-सन्धानात्मिका अन्तःकरणवृत्तिः, चित्तम्। अभि-मानात्मिका अन्तःकरणवृत्तिः, अहङ्कारः ॥६६॥

---

बुद्धेर्लक्षणमाह, बुद्धिर्नामिति। "ब्रह्मैवाहम्" इति निश्चया-त्मिका अन्तःकरणवृत्तिरेव बुद्धिः।

मनसो लक्षणमाह, मनो नामेति। अहं चिद्रूपो देहो वेति संशयात्मिका अन्तःकरणवृत्तिरेव मन इत्यर्थः ॥ ६५ ॥ सु०।

स्मरणात्मकचित्तस्य गर्वात्मकाहङ्कारस्य च बुद्धिमनसोरन्त-र्भाव इत्याह, अनयोरेवेति। यद्यपि अन्तःकरणत्वेन चतुर्णा-मेकत्वं, तथापि एकस्यैव पुरुषस्य पाचकः पाठक इत्यादिवृत्ति-भेदाद् भेदवत्, एकस्यापि अन्तःकरणस्य निश्चयसंशयस्मरणा-हङ्कारविषयभेदैर्बुद्ध्यादिभेद इत्यर्थः ॥ ६६ ॥ सु०।

---

बुद्धिमनसी लक्षयति, बुद्धिर्नाम इति। निश्चयोऽध्यवसायः। इदमित्थमेवेति विषयपरिच्छेदः सङ्कल्पः, इदं नीलमिदं पीतमिति विषयविवेचनम्। विकल्पस्तद्विप-र्य्यय इति भेदः ॥ ६५ ॥ विद्व०।

नन्वन्तःकरणस्य चतुष्टयत्वप्रसिद्धेः कथमिह द्वयमेव गृहीतम् ? इत्यत आह, अनयो-रेवेति। अनुसन्धानात्मिका अन्तःकरणवृत्तिश्चित्तम्। अभिमानात्मिका अन्तःकरण-वृत्तिरहङ्कारः। चित्तस्य बुद्धावन्तर्भावो विषयपरिच्छित्तिरूपत्वाविशेषात्। अहङ्कारस्य मनस्यन्तर्भावस्तस्यापि सङ्कल्पात्मकत्वाविशेषात्। एवं स्वरूपाभेदेऽपि विषयभेदात् क्वचित् क्वचिच्चित्ताहङ्कारयोर्बुद्धिमनोभ्यां पृथङ्निर्देशः। बुद्धेर्ह्यपूर्वो विषयः चित्तस्य पूर्वानुभूतः। तथा मनसो वाह्य आभ्यन्तरश्च सर्वो विषयो यथायोगमहङ्कारस्य तु अनात्मोपरक्त आत्मैवेति। अतो विषयभेदेऽपि स्वरूपाभेदाद्युक्तोऽन्तर्भावः ॥ ६६ ॥ विद्व०।

एते पुनराकाशादिगतसात्त्विकांशेभ्यो मिलितेभ्य उत्पद्यन्ते । एतेषां प्रकाशात्मकत्वात् सात्त्विकांशकार्य्यत्वम् ॥ ६७ ॥

इयं बुद्धिर्ज्ञानेन्द्रियैः सहिता सती, विज्ञानमयकोषो भवति ॥ ६८ ॥

अयं कर्त्तृत्वभोक्तृत्वसुखित्वदुःखित्वाद्यभि-

---

बुद्ध्यादीनामुत्पत्तिप्रकारं दर्शयति, एते पुनरिति ।

एतेषां चतुर्णां सात्त्विकांशेभ्यो भूतेभ्य उत्पत्तौ निमित्तमाह, एतेषामिति । बुद्ध्यादीनां प्रकाशात्मकत्वात् सात्त्विकांशभूतकार्य्यत्वमित्यर्थः ॥ ६७ ॥ सु० ।

बुद्धेर्विज्ञानमयकोषत्वं दर्शयति, इयं बुद्धिरिति । बुद्धेः सत्त्वकार्य्यत्वात् ज्ञानेन्द्रियसाहित्येन प्रकाशाधिक्यात् विज्ञानमयत्वम्, आत्माच्छादकत्वाच्च कोषत्वम् इत्यर्थः ॥ ६८ ॥ सु० ।

विशुद्धबुद्धिप्रतिबिम्बितचिदात्मनो जीवत्वं दर्शयति, अयं कर्त्तृत्वेति ।

तप्तायःपिण्डवत् बुद्ध्यारोपितं चैतन्यं वस्तुतोऽकर्त्तृ अभोक्तृ-

---

पूर्व्ववदेषां चतुर्णामपि अन्तःकरणभेदानां भौतिकत्वमाह, एते पुनः इति । उक्तानां ज्ञानेन्द्रियाणामन्तःकरणानाञ्च भूतगतसात्त्विकांशकार्य्यत्वे हेतुमाह, एतेषां प्रकाशात्मकत्वादिति ।—"तत्र सत्त्वं निर्म्मलत्वात्प्रकाशकमनामयम्" [ गीता १४ अध्या० ६ श्लोकः ] इति स्मृतेः । सत्त्वकार्य्यभूतः प्रकाश इन्द्रियान्तःकरणेषु उपलभ्यमानस्तेषां सत्त्वकार्य्यतां गमयतीत्यर्थः ॥ ६७ ॥ विद्व० ।

निरूप्यमाणे लिङ्गशरीर उक्तैरवयवैः सिद्धमवान्तरभेदं कथयति, इयं बुद्धिः इति । बुद्धिग्रहणेनार्थान्मनोव्यावृत्तिरभिप्रेता ॥ ६८ ॥ विद्व० ।

तदुपहितचैतन्यस्य च व्यपदेशभेदमाह, अयमिति । अयं विज्ञानमयकोषाव-

मानत्वेन इहलोकपरलोकगामी व्यावहारिको जीव इत्युच्यते ॥ ६९ ॥

मनस्तु ज्ञानेन्द्रियैः सहितं सन्मनोमयकोषो भवति ॥ ७० ॥

---

नित्यानन्दापरिच्छिन्नमक्रियमपि कर्त्तृत्वभोक्तृत्वसुखित्वदुःखित्वपरिच्छिन्नत्वक्रियावत्त्वाद्यभिमानेन स्वर्गादिलोकान्तरगामित्वं व्यावहारिकजीवत्वञ्च लभते इत्यर्थः ॥ ६९ ॥ सु० ।

मनोमयकोषं निरूपयति, मनस्त्विति। सत्त्वगुणप्रधानं मनः सत्त्वगुणांशेभ्यो जातं श्रोत्रादिज्ञानेन्द्रियैरेव सहितं सत् मनोमयकोषो भवतीत्यर्थः। अत्र तु मनसः सत्त्वोपहितरजोविकारेच्छारूपत्वात् सङ्कल्पविकल्पात्मकत्वेन बुद्ध्यपेक्षया जाड्याधिक्यात् मनोमयत्वम्, आत्माच्छादकत्वात् कोषत्वमिति भावः ॥ ७० ॥ सु० ।

---

च्छिन्नश्चिदात्मा जीव इत्युच्यते इत्यन्वयः। तस्य प्राज्ञात्मनो विशेषमाह, व्यावहारिक इति। व्यवहारमेव विशेषणान्तरेण व्यनक्ति, इहलोकेति। तत्र हेतुमाह, कर्त्तृत्वेति। तथा च श्रुतिः,—"विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" [ तैत्ति० २ वल्ली० ५ अनु० ] इति कर्त्तृत्वादिकं चैतन्यात्मनो न वास्तवं, किन्तु आभिमानिकमित्यभिप्रेत्याभिमानित्वेनेत्युक्तम्। तथा च श्रुतिः,—"स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव" [ बृह० उप० ४ अध्या० ३ ब्रा० ७ मन्त्रः ] इत्याद्या। इवशब्देन व्यवहारस्य आभासतां दर्शयति ; तथा न्यायौ च "कर्त्ता शास्त्रार्थवत्त्वात्" [ ब्रह्म० सू० २ अध्या० ३ पा० ३३ सूत्रम् ] "यथा च तक्षोभयथा" [ ब्रह्म० सू० २ अध्या० ३ पा० ४० सूत्रम् ] इति च कर्त्तृत्वाकर्त्तृत्वयोर्व्यावहारिकपारमार्थिकत्वे व्यवस्थापयतः ॥ ६९ ॥ विद्व० ।

पूर्ववन्मनःसम्बद्धमवान्तरभेदमाह, मनस्तु इति ॥ ७० ॥ विद्व० ।

कर्म्मेन्द्रियाणि — वाक्पाणिपादपायूपस्थाख्यानि। एतानि पुनराकाशादीनां रजोऽंशेभ्यो व्यस्तेभ्यः पृथक् पृथक् क्रमेण उत्पद्यन्ते ॥ ७१ ॥

---

कर्मेन्द्रियाणि उद्दिशति,—कर्मेन्द्रियाणीति।

एतेषामुत्पत्तौ साधनापेक्षायामाह, एतानीति। भूतानां त्रिगुणत्वेऽपि रजोगुणबहुलेभ्यो भूतेभ्यो वागादीनि पृथक् पृथक् क्रमेण उत्पद्यन्ते। रजोगुणप्रधानादाकाशात् वाग् उत्पद्यते, रजोगुणप्रधानाद्वायोः पाणीन्द्रियं, रजोगुणप्रधानादग्नेः पादेन्द्रियं, रजोगुणप्रधानात् जलात् पायिन्द्रियं, रजोगुणप्रधानायाः पृथिव्याः उपस्थेन्द्रियम् उत्पद्यते इत्यर्थः ॥ ७१ ॥ सु०।

---

कर्म्मसाधनानीन्द्रियाणि कर्मेन्द्रियाणि तानि विभजते, कर्मेन्द्रियाणि इति। वचनादानगमनविसर्गानन्दसाधनेन्द्रियत्वं यथाक्रमं वागादीनां प्रत्येकं लक्षणम्।

एतेषामपि पूर्व्ववद्भौतिकत्वमाह, एतानि पुनरिति।

ननु कथमिन्द्रियाणां भौतिकत्वं निर्द्दिश्यते यत एषां भूतयोनेः परमकारणादेवोत्पत्तिः श्रूयते "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" [मुण्ड० २ मुण्ड० १खण्ड० ३ मन्त्रः] इति। सत्यं श्रूयते। तत्रार्थक्रममेवाश्रित्य भूतभावमापन्नात् तस्माद्भूतयोनेरिन्द्रियोत्पत्तिराश्रिता। तथा च न्यायः,—"अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्" [ब्रह्म० सू० २ अध्या० ३ पा० १५ सूत्रम्] इति। न चैतेषां भौतिकत्वे प्रमाणाभावः,—"अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्" [छान्दो० उप० ६ अध्या० ५ खण्ड० ४ मन्त्रः] इति श्रौतलिङ्गस्य प्रमाणत्वात्। न च वागादिषु इन्द्रियत्वमप्रसिद्धमिति वाच्यं, "प्रज्ञया वाचं समारुह्य वाचा हि सर्वाणि नामानि आप्नोति" [३अध्या० ६मन्त्रः] इति कौशीतक्यादौ चक्षुरादिभिः सह वाचः समभिव्याहृतत्वात्। आथर्वणे च—"चक्षुश्च द्रष्टव्यञ्च" [प्रश्न० ४प्र० ८मन्त्रः] इत्यादिना सविषयाणीन्द्रियाणि अनुक्रम्य "हस्तौ चादातव्यं चोपस्थश्चानन्दयितव्यञ्च पायुश्च

विसर्जयितव्यञ्च पादौ च गन्तव्यञ्च" [ प्रश्न० ४ प्र० ८ मन्त्रः ] इति हस्तादीनामपि सविषयाणां समभिव्याहृतत्वात्। एतानि चेन्द्रियाणि एकादशैव भवन्ति, न न्यूनानि, नाधिकानि, "दशेमे पुरुषे प्राणा आत्मैकादशः" [ बृह० उप० ३ अध्या० ९ ब्रा० ४ मन्त्रः ] इति श्रुत्यनुरोधेन सिद्धान्तितत्वात्। अत्रात्मशब्दो मनोविषयः, प्राणशब्द इतरेन्द्रियविषय इति भेदः। अतीन्द्रियत्वं सूक्ष्मत्वम्, इन्द्रियाग्राह्यत्वमिति यावत्। अणुत्वं चैषां परिच्छिन्नत्वे सति सूक्ष्मत्वलक्षणमभ्युपगन्तव्यं, न तु परमाणुलक्षणत्वम्; तथा सति सर्वशरीरव्यापिकार्य्यानुपपत्तिप्रसङ्गात्। अपरिच्छिन्नत्वे चोत्क्रान्तिगत्यागतिश्रुतिव्याकोपप्रसङ्गः। स्थूलत्वे चोत्क्रान्तिसमये बिलान्निर्गच्छन्त इव सर्पाः शरीरच्छिद्रेभ्यो निष्क्रममाणानि इन्द्रियाणि प्रत्यक्षेणोपलभ्येरन्। न चोपलभ्यन्ते। तस्मादुक्तप्रकारेणाणूनीन्द्रियाणि। ननु "अग्निर्वाग्भूत्वा मुखं प्राविशत्" [ ऐत० उप० २ आर० ४ अध्या० ४ मन्त्रः ] इत्यादिश्रुतेरग्न्यादिदेवतानामेव मुखादिस्थानेषु वागादीन्द्रियात्मना प्रवेशश्रवणात्कथमेतेषां भौतिकत्वमुच्यते इति चेन्नैष दोषः। देवतानामपि आधिदैविकप्राणात्मनां भौतिकदेहविशिष्टचेतनानामैश्वर्य्ययोगात् अध्यात्मवागादिरूपेण मुखादिषु अवस्थानस्येष्टत्वात्। तथा च भौतिकान्यपीन्द्रियाणि देवताशरीराणि चेति न विरुध्यन्ते; यद्वा—इन्द्रियाण्युक्तलक्षणानि भौतिकान्येव देवतानां पुनस्तदधिष्ठातृत्वेन तच्छरीरतया तत्र प्रवेश एव "अग्निर्वाग्भूत्वा" [ ऐत० उप० २ आर० ४ अध्या० ४ मन्त्रः ] इत्यादावाम्नायत इति। तथा च न्यायः,—"ज्योतिराद्यधिष्ठानन्तु तदामननात्" [ब्रह्म० सू० २अध्या० ४पा० १४सूत्रम्] इति। लिङ्गञ्च "स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति" [ बृह० उप० ४ अध्या० ४ ब्रा० १ मन्त्रः ] इति तेजोमात्राणामिन्द्रियाणामुत्क्रान्तिसमये हृदयप्रवेशमुक्त्वा "स यत्रैष चाक्षुषः पुरुषः पराङ् पर्य्यावर्त्ततेऽथारूपज्ञो भवति" [बृह० उप० ४अध्या० ४ब्रा० १मन्त्रः] इत्यादित्यपुरुषस्य चक्षुषोऽपक्रमणं दर्शयति। ये पुनर्मुख्यप्राणस्य वृत्तिभेदा वागादय इति वदन्ति तेऽप्यनयैव नीत्या निराकरणीयाः। "ते ह वाचमूचुस्त्वं न उद्गाय" [ बृह० उप० १ अध्या० ३ ब्रा० २ मन्त्रः ] इत्युपक्रम्यासुरपाप्मविद्धत्वेन वागादीननुद्गातॄन्निर्द्धार्य्य समाप्य च वागादिप्रकरणं "अथ हेममासन्यं प्राणमूचुः" [ बृह० उप० १ अध्या० ३ ब्रा० ७ मन्त्रः ] इति पृथगेव मुख्यप्राणस्य निर्देशात्। तथा सुषुप्तावपि वागादीनामुपसंहारो मुख्यप्राणस्य सवृत्तिकस्यापि जागरणमिति वैषम्यलिङ्गाच्च प्राणादिन्द्रियाणां भेदः। एवमादिन्यायकलापो द्वितीयेऽध्याये चतुर्थे पादे विस्तृतः। इह पुनर्वेदान्तसारत्वाद्ग्रन्थस्य वेदान्तविहिता न्याया लेशतो दर्शिता इति। तस्मादयुक्तमिन्द्रियाणां भौतिकत्वादीति स्थितम् ॥ ७१ ॥ विद्व०।

वायवः,—प्राणापानव्यानोदानसमानाः॥७२॥

प्राणो नाम—प्राग्गमनवान् नासाग्रस्थानवर्त्ती॥ ७३ ॥

अपानो नाम—अवाग्गमनवान् पाय्वादिस्थानवर्त्ती॥ ७४ ॥

व्यानो नाम—विष्वग्गमनवान् अखिलशरीरवर्त्ती॥ ७५ ॥

---

वायूनुद्दिशति, वायव इति ॥ ७२ ॥ सु० ।

यथोद्देशं प्राणस्य लक्षणमाह, प्राणो नामेति। ऊर्द्ध्वगमनशीलो नासाग्रस्थायी वायुः प्राण इत्यर्थः ॥ ७३ ॥ सु० ।

अपानस्य लक्षणमाह, अपानो नामेति। अधोगमनशीलः पाय्वादिस्थायी वायुः अपान इत्यर्थः ॥ ७४ ॥ सु० ।

व्यानस्य लक्षणमाह, व्यानो नामेति। सर्वनाड़ीगमनशीलोऽखिलशरीरस्थायी वायुर्व्यान इत्यर्थः ॥ ७५ ॥ सु० ।

---

इदानीं वायुपञ्चकं विभजते, वायव इति ॥ ७२ ॥ विद्व० ।

प्राग्गमनम्—अग्रतो निःसरणम्। यद्यपि "प्राणो हृदये" [तैत्ति० ब्रा० ३।१०।८।५] इतिश्रुतेः "हृदि प्राणः" इत्यभिधानाच्च हृदयस्थानः प्राणः, तथापि नासाग्रे प्रत्यक्षमुपलभ्यमानत्वात् नासाग्रस्थानवर्त्तीत्युक्तम् ॥ ७३ ॥ विद्व० ।

अधो नाभेरधस्ताद्गमनवान्मलापनयनव्यापारेण। पायुर्गुदं तत्स्थानवर्त्तीत्यर्थः। आदिशब्दादुपस्थग्रहः। तत्रापि मूत्ररेतोविसर्गस्यापानकर्म्मत्वात् ॥ ७४ ॥ विद्व० ।

विष्वक्परितः सर्व्वतो गमनं विद्यते यस्य स तथा। प्राणापाननियमनकर्म्मारण्यामग्न्युत्पादनादिवीर्य्यवत् कर्म्महेतुत्वादखिलशरीरवर्त्ती व्यान इत्यर्थः। तथा च श्रुतिः,—"अथ यः प्राणापानयोः सन्धिः स व्यानः" [छान्दो० उप० १ अध्या० ३ खण्ड० ३ मन्त्रः] इत्युपक्रम्य "यथाग्नेर्मन्थनमाजेः सरणं दृढ़स्य धनुष आयमनम-

उदानो नाम—कण्ठस्थानीय ऊर्द्ध्वगमनवान् उत्क्रमणवायुः ॥ ७६ ॥

समानो नाम—शरीरमध्यगताशितपीतान्नादिसमीकरणकरः। समीकरणन्तु—परिपाककरणं रसरुधिरशुक्रपुरीषादिकरणम् ॥ ७७ ॥

केचित्तु नागकूर्मकृकरदेवदत्तधनञ्जयाख्याः पञ्च अन्ये वायवः सन्तीत्याहुः ॥ ७८ ॥

तत्र नागः,—उद्गिरणकरः। कूर्मः,—

---

उदानस्य लक्षणमाह, उदानो नामेति। ऊर्द्ध्वमुत्क्रमणशीलः कण्ठस्थायी वायुरुदान इत्यर्थः ॥ ७६ ॥ सु०।

समानस्य लक्षणमाह, समानो नामेति। शरीरमध्यगतान्नरसादिनेता वायुः समान इत्यर्थः। प्राणादीनां वायुत्वेन रूपेण एकत्वेऽपि क्रियाभेदेन भेद इत्यर्थः ॥ ७७ ॥ सु०।

कापिलमतानुसारिणः क्रियाभेदेन अन्येऽपि पञ्च वायवः सन्तीति वदन्तीत्याह, केचित्तु इति ॥ ७८ ॥ सु०।

तान्येव नामानि निर्दिशति, नाग इत्यादि। तथा चोक्तं,—

---

प्राणन्ननपानंत्तानि करोति" [छान्दो० उप० १ अध्या० ३ खण्ड० ५ मन्त्रः] इति ॥ ७५ ॥ विद्व०।

यद्यपि "चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः" [वृह० उप० ४ अध्या० ४ ब्रा० २ मन्त्रः] इति श्रुतेरुत्क्रमणस्य चक्षुरादिद्वारेषु अनियमस्तथा प कण्ठसम्बन्धस्य प्रायेण नियतत्वात् कण्ठस्थानवर्त्ती उदान इत्युक्तम् ॥ ७६ ॥ विद्व०।

अशितादेः समं नयनात् समान इत्यर्थः ॥ ७७ ॥ विद्व०।

मतान्तरमुत्थापयति स्वमतपरिशुद्धये, केचित्तु इति ॥ ७८ ॥ विद्व०।

उन्मीलनकरः। कृकरः,—क्षुधाकरः। देवदत्तः,—जृम्भणाकरः। धनञ्जयः,—पोषणाकरः ॥ ७९॥

एतेषां प्राणादिषु अन्तर्भावात् प्राणादयः पञ्च एव इति केचित् ॥ ८० ॥

---

"उद्गारे नाग आख्यातः कूर्मस्तून्मीलने स्मृतः। कृकरस्तु क्षुधि ज्ञेयो देवदत्तो विजृम्भणे। न जहाति मृतञ्चापि सर्वव्यापी धनञ्जयः॥" इति ॥ ७९ ॥ सु०।

वेदान्तिनस्तु नागादीनां प्राणादिषु अन्तर्भावं वदन्तीत्याह, एतेषामिति ॥ ८० ॥ सु०।

---

तेषां लक्षणान्याह, नाग इत्यादिना। उद्गिरणं—छर्दिः। उन्मीलनशब्दो निमीलनस्यापि उपलक्षणपरः। पोषणं—पुष्टिः। अन्यत्प्रसिद्धम् ॥ ७९ ॥ विद्व०।

उत्थापितं मतं प्रत्याचष्टे, एतेषामिति। केचिच्छब्द औपनिषदविषयः। एतेषां नागादीनां प्राणादिषु अन्तर्भावादित्ययमर्थः। उद्गिरणं मूर्द्धमुखस्य वायोः क्रिया। ऊर्द्धमुखश्च वायुरुदान इत्युक्तम्; तथा चोदानेनैवोद्गिरणस्यापि सिद्धौ नागस्य तत्कर्तुरुदानेऽन्तर्भावान्न ततः पृथक्त्वम्। उन्मीलनस्याङ्गचेष्टान्तर्गतत्वात् तस्याश्च व्याननिमित्तकत्वादुन्मीलनकर्त्तुः कूर्म्मस्य व्यानेऽन्तर्भावः। समानेनाशितपीतादीनां पाकेन रसादिभावमापद्य सकलशरीरदेशेषु तत्प्रवेशने कृते सत्येव क्षुधोत्पत्तेस्तत्कर्त्तुः कृकरस्य समानेऽन्तर्भावः। जृम्भणस्य निद्राऽऽलस्यादिहेतुकत्वान्निद्रालस्यादेश्च वातुलाद्यन्नोपजीवननिमित्तकत्वादन्नस्वीकरणस्य चापानकर्मत्वादपान एव परम्परया जृम्भणहेतोर्देवदत्तस्यान्तर्भावः। अपानाख्यस्यान्तर्मुखतया शरीरान्तः प्रविशतो वायोरन्नस्वीकरणहेतुत्वमैतरेयके समाम्नायते "तदपानेनाजिघृक्षत्तदावयत्" [ ऐत० उप० १ अध्या० ३खण्ड० १०मन्त्रः ] इति। रसलोहितमांसादिक्रमेण शरीरेऽन्नपरिणामे सत्येव पोषणापरपर्य्यायाः पुष्टेः सम्भवाद्रसादिनयनकर्त्तरि समाने धनञ्जयस्यान्तर्भाव इति; तथा च प्राणादीनामेव यथायथमुद्गारादिक्रियानिमित्ततया अवस्थान्तरमापद्यमानानां नागादिसंज्ञाया अप्युपपत्तौ तत्त्वान्तरकल्पनं तेषां गौरवमप्रामाणिकमिति भावः। श्रुतौ च पञ्चानामेव प्राणादीनां तत्र तत्र श्रवणात् तद्विरुद्धा चेयं कल्पना। प्राणादयोऽपि मुख्यस्यैकस्य प्राणस्य वृत्तिविशेषा एव न तत्त्वान्तरभूताः। "प्राणोऽपानो व्यान उदानः

एतत्प्राणादिपञ्चकम् आकाशादिगतरजोऽंशेभ्यो मिलितेभ्य उत्पद्यते ॥ ८१ ॥

इदं प्राणादिपञ्चकं कर्म्मेन्द्रियैः सहितं सत् प्राणमयकोषो भवति ॥ ८२ ॥

अस्य क्रियात्मकत्वेन रजोऽंशकार्य्यत्वम् ॥८३॥

---

प्राणादिवायूनामुत्पत्तौ कारणपिच्छायामाह, एतत्प्राणादीति। अपञ्चीकृतपञ्चमहाभूतेभ्यो रजःप्रधानेभ्यः प्राणादयो जायन्ते इत्यर्थः ॥ ८१ ॥ सु०।

एतेषां प्राणादीनां प्राणप्रचुरत्वात् प्राणमयत्वम्, आत्माच्छादकत्वात् कोषत्वञ्च भवतीत्याह, इदं प्राणादीति ॥८२॥सु०।

प्राणादीनां रजःप्रधानभूतकार्य्यत्वे निमित्तमाह, अस्येति। प्राणादीनां क्रियात्मकत्वाद् रजःकार्य्यत्वमित्यर्थः ॥ ८३ ॥ सु०।

---

समानोऽनः" इति वृहदारण्यके [१ अध्या० ५ब्रा० ३मन्त्रः] वृत्तिमतः प्राणस्य निरुपसर्गानशब्दवाच्यस्य पृथङ्निर्देशात्। तथा च न्यायः,—"पञ्चवृत्तिर्मनोवद्व्यपदिश्यते" [ब्रह्म० सू० २ अध्या० ४ पा० १२ सूत्रम्] इति। तथा मुख्यप्राणोऽपि वायोर्वाह्यस्य सूत्रात्मरूपस्य विकारो न शरीरमध्ये नभोवद्वृत्तिलाभमात्रेणावस्थितो वाह्यवायुरेव। नापि वागादीनां सामान्यवृत्तिरूपा वा क्रिया। "एतस्माज्जायते प्राणो मनः सर्व्वेन्द्रियाणि च। खं वायुः" [मुण्ड० २ मुण्ड० १ खण्ड० ३ मन्त्रः] इतिश्रुतौ वायोरिन्द्रियाणाञ्च प्राणात् पृथगेव निर्दिष्टत्वात्। तथा च न्यायः,—"न वायुक्रिये पृथगुपदेशात्" [ब्रह्म० सू० २ अध्या० ४ पा० ९ सूत्रम्] इति। "अणुश्च" [ब्रह्म० सू० २ अध्या० ४ पा० १३ सूत्रम्] इत्यादिन्यायवशादिन्द्रियवत् सूक्ष्मत्वादिकमपि प्राणस्यानुसन्धेयमिति सङ्क्षेपः ॥ ८० ॥ विद्व०।

प्राणादीनामपि पूर्व्ववदुपादानविशेषं सङ्कीर्त्तयति, एतदिति ॥ ८१ ॥ विद्व०।

उक्तानामेव कर्म्मेन्द्रियाणां प्राणादिभिर्मिलितानां पूर्व्ववदवान्तरविशेषमाह, इदं प्राणादीति ॥ ८२ ॥ विद्व० !

प्राणादिपञ्चकस्य रजोऽंशकार्य्यत्वे लिङ्गमाह, अस्येति ॥ ८३ ॥ विद्व०।

एतेषु कोषेषु मध्ये विज्ञानमयो ज्ञानशक्तिमान् कर्त्तृरूपः; मनोमय इच्छाशक्तिमान् करणरूपः; प्राणमयः क्रियाशक्तिमान् कार्य्यरूपः; योग्यत्वादेवमेतेषां विभाग इति वर्णयन्ति ॥ ८४ ॥

एतेषु पञ्चसु कोषेषु मध्ये विज्ञानमयमनोमयप्राणमयकोषाणां क्रमेण ज्ञानेच्छाक्रियाशक्तिभेदेन कर्त्तृकरणक्रियारूपत्वं दर्शयति, एतेष्विति। तत्र हेतुमाह, योग्यत्वादिति ॥ ८४ ॥ सु०।

उक्तं कोषत्रयमनूद्य तेषां प्रतिनियतां व्यवस्थां दर्शयति, एतेषु कोषेषु इत्यादिना। "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" [ बृह० उप० ४ अध्या० ३ ब्रा० ७मन्त्रः ] इतिश्रुतेर्विज्ञानस्य चैतन्यं प्रत्यतिसन्निहितत्वात् ज्ञानशक्तिमत्त्वम्। "कामः सङ्कल्पो विचिकित्सा" [ बृह० उप० १अध्या० ५ब्रा० ३मन्त्रः ] इत्यादिश्रुतेः कामापरपर्य्यायाया इच्छाया मनोवृत्तित्वावधारणादिच्छाशक्तिमत्त्वं मनोमयकोषस्य। "स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिन् शरीरे प्राणो युक्तः" [ छान्दो० उप० ८अध्या० १२ खण्ड० ३ मन्त्रः ] "कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति" [प्रश्न० उप० ६प्रश्न० ३मन्त्रः] "स प्राणमसृजत" [प्रश्न० उप० ६प्रश्न० ४ मन्त्रः ] इत्यादिश्रुतेः प्राणमयकोषस्य क्रियाशक्तिमत्त्वम्। योग्यत्वात् इत्यस्यायमर्थः। विज्ञानमयस्य तु कर्त्तृत्वमुपपादितं मनोमयस्य करणत्वं विवेकसाधनत्वात्। आत्मेन्द्रियविषयाणां सन्निकर्षे विद्यमानेऽपि यदन्वयव्यतिरेकाभ्यां ज्ञानभावाभावौ तन्मनो- विवेकसाधनत्वात् करणपक्षपातीति युक्तं मनोमयस्य करणरूपत्वम्। तथा च श्रुतिः,—"अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषं" [बृह० उप० १ अध्या० ५ ब्रा० ३ मन्त्रः ] इत्यादि "तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति" इत्यन्तेन। न्यायश्च भवति,—"नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा" [ ब्रह्म० सू० २ अध्या० ३ पा० ३२ सूत्रम् ] इति; तथा "तौ मिथुनं समैतां ततः प्राणोऽजायत" [ बृह० उप० १ अध्या० ५ ब्रा० १२ मन्त्रः ] इतिश्रुतेः प्राणस्य वाङ्मनसयोर्मिथुनीभूतयोरुत्पत्तिश्रवणात् प्राणमयस्य कार्य्यरूपत्वं युक्तमिति ॥ ८४ ॥ विद्व०।

एतत् कोशत्रयं मिलितं सत् सूक्ष्मशरीर-मित्युच्यते ॥ ८५ ॥

अत्रापि अखिलसूक्ष्मशरीरम् एकबुद्धिविषय-तया वनवज्जलाशयवद्वा समष्टिः, अनेकबुद्धि-विषयतया वृक्षवज्जलवद्वा व्यष्टिश्च भवति ॥ ८६ ॥

एतत्समष्ट्युपहितं चैतन्यं सूत्रात्मा, हिरण्य-

इदमेव कोषत्रयं सूक्ष्मशरीरमिति व्यवह्रियते इत्याह, एतत्कोषेति ॥ ८५ ॥ सु० ।

अस्य समष्टित्वे हेतुमाह,—अत्रापीति ।

एकबुद्धीति ।—चराचरप्राणिमात्रस्य यावन्ति अनन्तानि सूक्ष्मशरीराणि, तेषां सर्वेषां सूक्ष्मशरीराणां सूत्रात्मना हिरण्य-गर्भाख्येन स्वीयैकबुद्ध्या विषयीकृतत्वात् समष्टित्वमित्यर्थः । तत्र दृष्टान्तमाह, वनवदित्यादि । अस्यैव सूक्ष्मशरीरस्य व्यष्टित्वं दर्शयति, अनेकेत्यादि । अनेकेषां जीवानां प्रत्येकं स्वस्वलिङ्ग-शरीरस्य स्वस्वबुद्धिविषयत्वेन अनेकबुद्धिविषयतया व्यष्टित्व-मित्यर्थः । तत्र दृष्टान्तमाह, वृक्षवदित्यादि ॥ ८६ ॥ सु० ।

उक्तसमष्ट्यवच्छिन्नचैतन्यस्य सूत्रात्मेत्यादिसंज्ञां प्रदर्शयति,

एवं सूक्ष्मशरीरस्यावयवान् सविशेषानुक्त्वा अवयविनं निर्दिशति, एतत्कोषेति ॥ ८५ ॥ वि० ।

"लिङ्गं मनो यत्र निषक्तमस्य" [ बृह० उप० ४ अध्या० ४ ब्रा० ६ मन्त्रः ] "अनन्तं वै मनोऽनन्ता विश्वेदेवाः" [ बृह० उप० ३ अध्या० १ ब्रा० ९ मन्त्रः ] इत्यादिश्रुतिषु लिङ्गशरीरस्याप्येकत्वबहुत्वश्रवणात् तदेकत्वानेकत्वयोरप्यज्ञानवदेव व्यवस्थेत्यभिप्रेत्याह, अखिलसूक्ष्म इति । अनयोस्तु व्यष्टिसमष्ट्योरेकत्वं स्पष्टमेव पठ्यते । "वायुरेव व्यष्टिर्वायुः समष्टिः" [ बृह० ३ अध्या० ३ ब्रा० २ मन्त्रः ] इति ॥ ८६ ॥ वि० ।

बृहदारण्यके समष्टिलिङ्गशरीराभिमानिनश्चैतन्यस्य व्यवहारसिद्धान् व्यवदेश-

---

गर्भः, प्राण इति चोच्यते, सर्वत्रानुस्यूतत्वात् ज्ञानेच्छाक्रियाशक्तिमदुपहितत्वाच्च ॥ ८७ ॥

अस्यैषा समष्टिः स्थूलप्रपञ्चापेक्षया सूक्ष्मत्वात् सूक्ष्मशरीरं विज्ञानमयादिकोषत्रयं, जाग्र-

---

एतत्समष्टीति। तत्र हेतुमाह, सर्वत्रेति।—सर्वप्राणिलिङ्गशरीरेषु अनुस्यूतत्वाद्विद्यमानत्वादित्यर्थः। हेत्वन्तरमाह, ज्ञानेच्छेत्यादि। ज्ञानेच्छाक्रियाशक्तिमत्कोषत्रयोपाध्यवच्छिन्नत्वादित्यर्थः ॥ ८७ ॥ सु०।

विज्ञानमयादिकोषत्रयस्य सूक्ष्मशरीरतां दर्शयति, अस्यैषेति। अस्य सूत्रात्मनो हिरण्यगर्भाख्यस्य विज्ञानमयादिकोषत्रयं सूक्ष्मशरीरम् अस्य स्थूलप्रपञ्चापेक्षया सूक्ष्मत्वादित्यर्थः। अस्यैव विज्ञानमयादिकोषत्रयस्य स्वप्नत्वे युक्तिमाह, जाग्र-

---

विशेषानाह, एतत्समष्टीति। व्यपदेशत्रये निमित्तमाह, सर्वत्रेत्यादिना। सर्वत्रानुस्यूतत्वात्सूत्रात्मा। ज्ञानशक्तिमदन्तःकरणोपहितत्वाद्धिरण्यगर्भः। क्रियाशक्तिमदधिदैवतप्राणरूपत्वात् प्राणः, तादृगध्यात्मप्राणरूपत्वाद्वा। यद्वा,—ज्ञानक्रियाशक्तिमत्समष्टिप्राणेन्द्रियसमुदायात्मकं समष्टिलिङ्गशरीरं तदुपहितत्वाज्ज्ञानशक्तिप्राधान्येन हिरण्यगर्भः क्रियाशक्तिप्राधान्येन प्राण इति च व्यपदेश इति योजना। तथा च श्रुतिवचनानि ;—"वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेण" [ बृह० उप० ३ अध्या० ७ ब्रा० २ मन्त्रः ] इति। "हिरण्यगर्भः समवर्त्ततताग्रे" [ ऋग्वेद ८ अष्ट० ७ अध्या० ३ वर्ग० ]। हिरण्यगर्भं जनयामास पूर्वं" [ श्वेता० उप० ३ अध्या० ४ मन्त्रः ] इति। "कतम एको देव इति प्राण इति" [ बृह० उप० ३ अध्या० ९ ब्रा० ९ मन्त्र० ] चैवमादीनि। प्राण इति चोच्यते इति चशब्दात्कः प्रजापतिर्ब्रह्मेत्यादिव्यपदेशान्तराणि समुच्चीयन्ते ॥ ८७ ॥ विद्व०।

एवमुपहितस्य व्यपदेशभेदानुक्त्वोपाधेरपि तानाह, अस्यैषेत्यादिना। स्थूलप्रपञ्चो विराड्विज्ञानमयादिकोषत्रयं लिङ्गशरीरं सूक्ष्मशरीरमिति सम्बन्धः। मध्यप्रदीपन्यायेनोत्तरत्रापि जाग्रद्वासनेत्यत्र कोषत्रयपदं सम्बध्यते। वासनामयत्

द्वासनामयत्वात् स्वप्नः, अत एव स्थूलप्रपञ्चलय-स्थानमिति चोच्यते ॥ ८८ ॥

एतद्व्यष्ट्युपहितं चैतन्यं तैजसो भवति, तेजो-मयान्तःकरणोपहितत्वात् ॥ ८९ ॥

अस्यापि इयं व्यष्टिः स्थूलशरीरापेक्षया सूक्ष्म-

---

दित्यादि। विराट्रूपेणानुभूतस्थूलप्रपञ्चविषयकवासनामयत्वात् स्वप्नत्वमस्येत्यर्थः। अत एवेति।—यतः स्वप्नत्वं सूक्ष्मत्वञ्च अत एव स्थूलप्रपञ्चलयस्थानमित्युच्यते इत्यर्थः ॥ ८८ ॥ सु०।

विज्ञानमयादिसमष्ट्युपाध्यवच्छिन्नचैतन्यस्य हिरण्यगर्भत्वं प्रतिपाद्य इदानीं तद्व्यष्ट्युपलक्षितचैतन्यस्य तैजसत्वं निरूपयति, एतद्व्यष्टीति। तत्र हेतुमाह, तेजोमयेत्यादि ॥८९॥ सु०।

व्यष्टिरूपं विज्ञानमयादिकोषत्रयं तैजसस्यापि सूक्ष्मशरीरमिति दर्शयति, अस्यापीति। सूक्ष्मशरीरत्वे हेतुमाह, स्थूलेति।

---

चास्य श्रुतिराह "तस्य हैतस्य पुरुषस्य रूपं, यथा माहारजनं वासो यथा पाण्डाविकं" [ बृह० उप० २ अध्या० ३ ब्रा० ६ मन्त्रः ] इत्यादि "सकृद्विद्युत्तं" इत्यन्तेन। स्वप्नत्वं चास्य अव्याकृतविराजोः सन्ध्यस्थानत्वादुपपन्नं "सन्ध्यं तृतीयं स्वप्नस्थानं" [ बृह० उप० ४ अध्या० ३ ब्रा० ९ मन्त्रः ] इति श्रुतेरविशेषात्। यतो वासनामयोऽत एवेति योजना। "अस्य लोकस्य सर्वावतो मात्रामपादाय स्वयं विहत्य" [ बृह० उप० ४ अध्या० ३ ब्रा० ९ मन्त्रः ] "स्वप्नेन शारीरमभिप्रहत्य" [ बृह० उप० ४ अध्या० ३ ब्रा० ११ मन्त्रः ] इत्याद्या च श्रुतिः स्थूलशरीरस्य स्वप्ने लयं दर्शयन्ती तत्समष्टेर्महाप्रपञ्चस्यापि सन्धौ तं सूचयति ॥ ८८ ॥ विद०।

एवं समष्टिलिङ्गतदुपहितचैतन्ययोर्व्यपदेशान् उक्त्वा व्यष्टिलिङ्गतदुपहितचैतन्ययोरपि तानाह, एतदिति। तैजसव्यपदेश्यत्वे हेतुमाह, तेजोमया इति। तेजोमयत्वं वासनामयत्वं "स्वयं निर्माय स्वेन भासा" [ बृह० उप० ४ अध्या० ३ ब्रा० ९ मन्त्रः ] इतिश्रुतौ भाःशब्देनान्तःकरणस्य वासनात्मनो व्याख्यातत्वात् ॥ ८९ ॥ विद०।

त्वात् सूक्ष्मशरीरं विज्ञानमयादिकोषत्रयं, जाग्रद्वासनामयत्वात् स्वप्नः, अत एव स्थूलशरीरलयस्थानमिति चोच्यते ॥ ६० ॥

एतौ सूत्रात्मतैजसौ तदानीं सूक्ष्माभिर्मनो-

---

अस्यापि स्वप्नत्वे हेतुमाह, जाग्रदित्यादि। विश्वचैतन्येनानुभूतस्थूलशरीरविषयकवासनामयत्वात् स्वप्नत्वमित्यर्थः। अस्यैव सूक्ष्मशरीरस्य स्थूलशरीरलयस्थानत्वे युक्तिमाह, अत एवेति ॥ ६० ॥ सु०।

यथा पूर्व्वं प्राज्ञेश्वरौ अज्ञानवृत्तिभिः सुषुप्त्यवस्थायामानन्दमनुभवतः, तथा हिरण्यगर्भतैजसावपि स्वप्नावस्थायां मनोवृत्तिभिः वासनामयान् शब्दादिविषयान् अनुभवत इति दर्श-

---

अस्यापीति स्पष्टार्थः। "योऽयं प्राणः स वायुः" [ बृह० उप० ३ अध्या० १ ब्रा० ५ मन्त्रः ] इतिश्रुतेः ॥ ६० ॥ विद्व०।

समष्टिव्यष्टिलिङ्गयोस्तदवस्थयोरपि सम्भ्ययोरभेदं सिद्धवत्कृत्य तत्र तैजससूत्रयोर्भोगविशेषं निर्दिशति, एताविति। तदानीं स्वप्नावस्थायाम्। निद्रादिदोषदूषितस्य अदृष्टादिसमुद्बोधितसंस्कारविशेषसचिवस्यान्तःकरणस्य, याः संस्कारानुरूपा वृत्तयः तादृगन्तःकरणसंसृष्टचैतन्यस्थाविद्याशक्तिविजृम्भितविषयाकारास्ताभिः सूक्ष्मविषयान् जाग्रद्वासनामयानीषदस्फुटाननुभवत इत्यर्थः। न स्वप्नः स्मृतिरपरोक्षावभासितत्वात्; नापि प्रत्यक्षप्रमा सम्प्रयोगाद्यभावात्; न च सुषुप्तिः स्पष्टं विषयानुभवात्; नापि जागरितं तदुचितदेशकालनिमित्तानामसम्भवात्। तथा हि "यथा केशः सहस्रधा भिन्नः" [ बृह० उप० ४ अध्या० २ ब्रा० ३ मन्त्रः ] इत्यादिना केशसहस्रांशैर्नाडीरुपमीय "एताभिर्वा एतदास्रवदास्रवति" [ बृह० उप० ४ अध्या० २ ब्रा० ३ मन्त्रः ] इति स्वप्नाय तादृशनाडीप्रवेशं दर्शयति श्रुतिः, तथा च अतिसूक्ष्मासु नाडीषु स्वप्नं पश्यतो न नदीसमुद्रवनगिरिनगरीनिवेशोचितो देशोऽस्ति, येन तत्र स्थितान् नद्यादीन् पश्येत्। ननु "वहिः कुलायादमृतश्चरित्वा" [बृह० ४ अध्या० ३ ब्रा० १२मन्त्रः] इति श्रुतेर्वहिरेव स्वप्नान् पश्यतीति चेत् न, तत्र वहिःशब्देन स्थूलशरीरोपरागाभावमात्रस्य विव-

वृत्तिभिः सूक्ष्मविषयान् अनुभवतः। "प्रविविक्तभुक् तैजसः" [माण्डू० ४] इत्यादिश्रुतेः ॥ ९१ ॥

अत्रापि समष्टिव्यष्ट्योस्तदुपहितसूत्रात्मतैजसयोः वनवृक्षवत् तदवच्छिन्नाकाशवच्च जलाशयजलवत् तद्गतप्रतिबिम्बाकाशवच्चाभेदः ॥ ९२ ॥

---

यति, एतावित्यादि। अस्मिन्नर्थे श्रुतिमुदाहरति, प्रविविक्तेत्यादि ॥ ९१ ॥ सु०।

इहापि विज्ञानमयादिकोषत्रयस्य समष्टिरूपस्य तदवच्छिन्नसूत्रात्मनश्च व्यष्टिरूपविज्ञानमयादिकोषत्रयस्य तदवच्छिन्नतैजसचैतन्यस्य च वनवृक्षादितदवच्छिन्नाकाशादिदृष्टान्तमुखेनाभेदं दर्शयति, अत्रापीत्यादि। समष्टिव्यष्ट्युपाध्यो-

---

चितत्वात्; अन्यथा तस्मिन्नेव शरीरे नियमेन पुनर्जागरणानुपपत्तेः। तथा च श्रुत्यन्तरं "कुरुष्वहमद्य शय्यायां शयानो निद्राऽभिप्लुतः स्वप्ने पञ्चालानधिगतश्चास्मिन् प्रतिबुद्धश्च" [ब्रह्मसू० ३ अध्या० २ पा० ३ सूत्रभाष्यम्] इति स्वप्नप्राप्तदेशान्तरात्पुनरागमनरहितस्यापि स्वप्नदेशस्थशरीरे जागरणं दर्शयति; अतो न तत्र जाग्रदुचितो देशः; नापि कालस्तदुचितः सम्भवति मुहूर्त्तमात्रेऽपि संवत्सरशतानामनुभवात्, नाप्युचितं निमित्तं तत्र सम्भवति तच्चदारुमृदाद्यभावेऽपि अकस्मादेव प्रासादादेर्निष्पत्तिदर्शनात्। जाग्रदवस्थापन्नानां वस्तूनां स्वप्नेऽभावं दर्शयित्वा नूतनानां वासनात्मकानां निर्माणं दर्शयति श्रुतिः,—"न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते" [बृह० ४ अध्या० ३ ब्रा० १० मन्त्रः] इत्यादिना। तस्मान्मायामय एव स्वप्न इति द्रष्टव्यम्,—तथा च न्यायः,—"मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" [ब्रह्मसू० ३ अध्या० २ पा० ३ सूत्रम्] इति।

उक्तेऽर्थे प्रमाणमाह, प्रविविक्तभुग् इति। आदिशब्दात् "तस्मादेष प्रविविक्ताहारतर इवैव भवति" [बृह० उप० ४ अध्या० २ ब्रा० ३ मन्त्रः] इत्यादिश्रुत्यन्तरग्रहः ॥ ९१ ॥ विद्व०।

अत्रापीति स्पष्टार्थः ॥ ९२ ॥ विद्व०।

एवं सूक्ष्मशरीरोत्पत्तिः ॥ ९३ ॥

स्थूलभूतानि तु पञ्चीकृतानि ॥ ९४ ॥

पञ्चीकरणन्तु आकाशादिपञ्चसु एकैकं द्विधा समं विभज्य, तेषु दशसु भागेषु प्राथमिकान् पञ्च

वनवृक्षवत् जलाशयजलवच्चाभेदः उपाधिद्वयावच्छिन्नचैतन्ययोः सूत्रात्मतैजसयोरपि वनवृक्षावच्छिन्नाकाशवत् जलाशयजलगतप्रतिबिम्बाकाशवच्चाभेदः इत्यर्थः ॥ ९२ ॥ सु० ।

सूक्ष्मशरीरोत्पत्तिप्रकरणमुपसंहरति, एवमित्यादि ॥ ९३ ॥ सु० ।

अथेदानीं स्थूलशरीरोत्पत्तिं निरूपयितुमुपक्रमते, स्थूलेत्यादि। तुशब्दः पूर्व्वस्माद्वैषम्यं द्योतयति, पञ्चीकृतानीति। अपञ्चीकृतसूक्ष्मभूतापेक्षया स्थूलभूतानि पञ्चीकृतानीत्यर्थः ॥ ९४ ॥ सु० ।

पञ्चीकरणमेव प्रतिपादयितुं प्रतिजानीते, पञ्चीकरणन्त्विति। पञ्चीकरणप्रकारमेवाह, आकाशादिपञ्चस्वित्यादि। अयमर्थः,—सृष्टिकाले सकलप्राण्यदृष्टवशादीश्वरप्रेरणया आकाशवायुतेजोवन्नान्यविद्यासहायभूतात् परमात्मनः सकाशादनुक्रमजातानि तानि अपञ्चीकृतानि सूक्ष्माणि व्यवहारासमर्थानीति कृत्वा तदीयस्थौल्यापेक्षायां व्यवहर्त्तृप्राणिजातधर्माधर्मापेक्षयैव तान्येव भूतानि पञ्चीकृतानि भवन्ति। तानि च प्रत्येकं द्वैविध्यमापद्यन्ते। तेषु आकाशादिषु दशसु भागेषु

सूक्ष्मशरीरप्रपञ्चनमुपसंहरति, एवमिति ॥ ९३ ॥ विद्व० ।

पूर्व्वं प्रतिज्ञातानि स्थूलभूतानि प्रपञ्चयति, स्थूल इति ॥ ९४ ॥ विद्व० ।

पूर्वोक्तानामेव भूतानां परस्परं व्यवहर्त्तृप्राणिनिकायव्यवहारनिर्वाहकतदीय-

भागान् प्रत्येकं चतुर्धा समं विभज्य, तेषां चतुर्णां भागानां स्वस्वद्वितीयार्द्धभागं परित्यज्य, भागान्तरेषु संयोजनम्। तदुक्तं,—"द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः। स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते॥" इति [ पञ्चदशी १ परि० २७ श्लोकः ] ॥ ९५ ॥

अस्याप्रामाण्यं नाशङ्कनीयं, त्रिवृत्करणश्रुतेः पञ्चीकरणस्याप्युपलक्षणार्थत्वात् ॥ ९६ ॥

---

प्राथमिकान् पञ्चभागान् प्रत्येकं चतुर्धा समं विभज्य स्वार्द्धपरित्यागेन चतुर्णां प्रत्येकं भागान्तरेषु सन्निवेशेन पञ्चीकृतानि स्थूलानि भवन्तीति।

अस्मिन्नर्थे वृद्धसम्मतिमाह, तदुक्तमित्यादि ॥ ९५ ॥ सु० ।

पञ्चीकरणस्य त्रिवृत्करणप्रतिपादकश्रुत्यन्तरविरोधमाशङ्क्य परिहरति, अस्येत्यादि। भूतत्रयसृष्टिश्रुतौ सृष्टिपरिपूर्त्त्यर्थमत्रा-

---

धर्माधर्मापेक्षपरमेश्वरसान्निध्यादिनिमित्तापेक्षया विभागेन मिलितानां स्थूलतापत्तिः पञ्चीकरणमित्याह, पञ्चीकरणन्तु इति ॥ ९५ ॥ विद्व० ।

ननु कथमित्थंविभागेन पञ्चीकरणं निरूप्यते तत्र प्रमाणाभावादित्याशङ्क्याह, अस्येति। "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति" [ छान्दो० ६ अध्या० ३ खण्ड० २ मन्त्रः ] "तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" [ छान्दो० ६ अध्या० ३खण्ड० ३ मन्त्रः ] इतीक्षित्वा सा सदाख्या परमात्मदेवता सृष्टानां तिसृणां देवतानां तेजोवन्नात्मिकानां मध्ये एकैकां देवतां त्रिवृतं त्रिवृतं त्रिरूपां त्रिरूपामकरोत् कृतवतीति त्रिवृत्करणश्रुतिः। सा पञ्चीकरणमपि उपलक्षयति आक्षिपतीत्यर्थः। त्रिवृत्करणं नाम तेजोवन्नानां त्रयाणां मध्ये एकैकं द्विधा समं विभज्य पुनरेकैकभागस्य द्विधा विभागं कृत्वा स्वस्वद्वितीयं स्थूलभागं परित्यज्य अन्यदीयस्थूलभागयोरेकैकस्य भागस्य संयोजनम्।

श्रुतमपि भूतद्वयमाश्रित्य भूतपञ्चकाभिप्रायेण भूतत्रयसृष्टिप्रतिपादनादविरोध इत्यर्थः ॥ ९६ ॥ सु० ।

---

अत्र केचित्प्रगल्भन्ते।—सम्प्रदायाध्वना पञ्चीकरणं यद्यपि स्थितं, तथापि युक्तिदुष्टत्वाद्वाचस्पतिमतं शुभमित्यादिना। तत्र युक्तिञ्च इत्थमाचचते,—गगनपवनयोः किल पृथिव्याद्यात्मत्वे रूपवत्त्वमहत्त्वाभ्यां चाक्षुषत्वं तयोः प्रसज्येतेति। तत्र त्रिवृत्करणपक्षेऽपि तेजसः पृथिव्यात्मत्वे काठिन्यद्रवत्वाभ्यां विशिष्टतयोपलम्भप्रसङ्ग इति दोषसाम्ये शक्तितेऽर्द्धभूयस्त्वान्न दोष इति परिहारस्य पञ्चीकरणपक्षेऽपि समानत्वेन दूषणोद्धारे व्यवहारमार्गप्राप्तपञ्चीकृतिर्मुधा पञ्चीकरणस्य कुत्रापि अश्रवणादिति। तत्रेदं वक्तव्यम्;—किं पञ्चीकरणस्य व्यवहारमार्गसिद्धत्वादप्रामाण्यं किंवा अश्रुतत्वादाहोस्वित् त्रिवृत्करणश्रुतिविरोधादिति। आद्ये अष्टकाकरणादीनां शिष्टव्यवहाराणाम् अप्रामाणिकत्वापत्तिः; द्वितीयेऽपि किं साक्षाच्छ्रवणाभावो हेतुः, उत श्रुतार्थापत्त्यभावोऽपि; नाद्यः, साक्षादश्रुतस्य प्रत्याख्याने परमापूर्वादीनामपि प्रत्याख्यानप्रसङ्गात्। न द्वितीयः श्रुतार्थापत्तेर्विद्यमानत्वात्। तथाहि छान्दोग्ये तेजःप्रभृतीनां त्रयाणां सृष्टिश्रुतौ तावच्छ्रुत्यन्तरप्रसिद्धाकाशवायुसृष्टेरपि उपसंहरणीयत्वम्। वियदधिकरणे तेजोधिकरणे च निर्द्धारितमेकविज्ञानेन सर्व्वविज्ञानप्रतिज्ञाहान्यादिभिर्हेतुभिः। तथा च श्रुत्यन्तरैकवाक्यतया पञ्चानां भूतानां सृष्टिं प्रक्रम्य तेषां सूक्ष्मतया अव्यवहार्य्याणां व्यवहारसिद्धये त्रिवृत्करणं ब्रुवन्ती श्रुतिः पञ्चीकरणाभिप्राया चेन्न, स्यात्तदा वाय्वाकाशयोः सूक्ष्मत्वानिवृत्तेरव्यवहार्य्यतापत्तौ सृष्टानां भूतानां व्यवहाराय त्रिवृत्करणोपदेशानुपपत्तिः केन वार्य्यते? न च वाय्वाकाशयोर्व्यवहार एव नास्तीति वाच्यं, महान् वायुर्महन्नभ इति व्यवहारस्य सर्व्वजनीनत्वात्। ननु श्रुत्युक्तमित्येव त्रिवृत्करणं स्वीक्रियते न व्यवहारायेति चेन्न, त्रिवृत्करणवाक्ये स्वसम्बन्धिनः फलस्याभावात् फलवदात्मैक्यज्ञानार्थवादत्वे यथासृष्टिन्यायं त्रिवृत्करणं युक्तमर्द्धजरतीयस्यान्याय्यत्वात्।

ननु शाखान्तरे भूतद्वयसृष्टेः श्रुतत्वात् तत्परित्यागानुपपत्तेश्छान्दोग्यतैत्तिरीयादिश्रुत्योर्विरोधपरिहारायोपसंहारः क्रियते न तथा पञ्चीकरणं क्वचिच्छ्रुतमस्ति येन तन्न्यायोऽनुसरणीयः स्यादिति चेत्, सत्यम्; तथापि न्यायानुसरणं युक्तम्। यथा त्रिसर्गश्रुतौ सृष्टानां भूतानां स्फुटतरव्यवहाररूपनामरूपव्याकरणोपायतया त्रिवृत्करणं श्रुतं तद्वद्भूतपञ्चकसर्गश्रुतावपि तथा नामरूपव्याकरणोपायः कश्चिदीश्वरस्येच्छितुर्युक्तः। स चोपायविशेषस्तस्यैवेश्वरस्य भूतयोनेः शाखान्तरे त्रिवृत्करणरूपः श्रुतः, तत्

पञ्चानां पञ्चात्मकत्वे समानेऽपि तेषु च "वैशेष्यात्तु तद्वादस्तद्वादः" [ ब्रह्मसूत्र० २अध्या० ४ पाद० २२ सूत्रम् ] इति न्यायेन आकाशादि-व्यपदेशः सम्भवति ॥ ९७ ॥

तदानीमाकाशे शब्दोऽभिव्यज्यते, वायौ शब्द-

---

आकाशादिपञ्चभूतेषु चतुर्धा विभक्तानामन्येषां पञ्चभूतानां प्रत्येकानुप्रवेशेन पञ्चीकृतानाम् आकाशादीनां पञ्चात्मकत्वा-विशेषाद् आकाशादिव्यपदेशो न स्यादित्याशङ्क्य परिहरति, पञ्चानामित्यादि। आकाशादीनां पञ्चानां पञ्चात्मकत्वे समाने-ऽपि तेषु पञ्चभूतेषु तद्विशेषानुप्रवेशात् तत्तन्नामभिः व्यवहारः सम्भवतीत्यर्थः ॥ ९७ ॥ सु० ।

तदानीमिति। यदा पञ्चीकृतानि आकाशादीनि तदानीं

---

परित्यागेनान्यस्य कल्पनायां प्रमाणाभावात् तस्यैव पञ्चसर्गश्रुतावपि उपसंहारे प्राप्ते तस्य पञ्चीकरणार्थत्वमन्तरेण पञ्चानां भूतानां स्फुटतरव्यवहारोपायतानुपपत्तेर्युक्तं त्रिवृत्-करणवाक्यस्य पञ्चीकरणोपलक्षणत्वमिति ; एतेन चरमः पक्षः प्रतिक्षिप्तस्त्रिवृत्करणश्रुतेः पञ्चीकरणार्थत्वनिरूपणे कृते तेन पञ्चीकरणस्य विरोधासम्भवात्। श्रुत्यभिप्रायश्चैवं वर्णितो विद्वत्तमाचार्य्यैः। "आकाशस्य सर्व्वावकाशतया सर्वाव्यतिरेकाद्वायोश्च सर्व्वचेष्टाहेतुत्वेन सर्वाविनाभूतत्वात् तयोस्तेजःप्रभृतिष्वन्तर्भावं सिद्धवत्कृत्य त्रिवृत्करणं प्रयोगसौकर्य्यार्थं श्रुतिर्वर्णयाम्बभूव" इति। तस्मादस्ति पञ्चीकरणं प्रामाणिकमित्यल-मतिनिर्बन्धेन ॥ ९६ ॥ विद्व० ।

ननु पृथिव्यादीनां भूतानां चेत् सर्व्वभूतात्मकत्वं, तथा सति व्यवहारसाङ्कर्य्यप्रसङ्ग इत्याशङ्क्याह, पञ्चानामिति।—वैशेष्याद्विशेषभावाद् भागाधिक्यात् तद्वादो नभः पवन-स्तेजो जलं पृथिवीत्यादिव्यपदेशो भवतीति द्वितीयाध्यायसमाप्त्यधिकरणे न्यायेन निर्णयः कृतः, तेन न्यायेनाकाशादौ व्यवहारासाङ्कर्य्यं सिध्यतीत्यभिप्रायः ॥ ९७ ॥ विद्व० ।

इदानीं भूतानां पञ्चीकृतत्वे लिङ्गमाह, तदानीमिति। तदानीं पञ्चीकरणान-न्तरमाकाशे शब्दोऽभिव्यज्यते। स्फुटतयेति सर्व्वत्र योजनीयम्। एतदुक्तं भवति,—

स्पर्शौ, अग्नौ शब्दस्पर्शरूपाणि, अप्सु शब्दस्पर्शरूपरसाः पृथिव्यां शब्दस्पर्शरूपरसगन्धाश्च ॥ ९८ ॥

एतेभ्यः पञ्चीकृतेभ्यो भूतेभ्यो भूर्भुवः स्वर्महर्जनस्तपः सत्यमित्येतन्नामकानामुपर्य्युपरि विद्यमानानाम् अतलवितलसुतलरसातलतलातलमहातलपातालनामकानामधोऽधोविद्यमानानां लोकानां ब्रह्माण्डस्य, तदन्तर्गतचतुर्विधस्थूलशरीराणां तदुचितानामन्नपानादीनाञ्चोत्पत्तिर्भवति ॥ ९९ ॥

---

स्थूलत्वेन स्वस्वकार्य्योत्पादनसमर्थत्वादाकाशेऽव्यक्तरूपेण स्थितः शब्दोऽभिव्यज्यते व्यक्तो भवतीत्यर्थः ॥ ९८ ॥ सु० ।

उक्तेभ्यो भूतेभ्यः चतुर्दशभुवनोत्पत्तिप्रकारं दर्शयति, एतेभ्य इति। एतेभ्यः भूतेभ्यः समुत्पन्नब्रह्माण्डस्य चतुर्विधशरीराणाञ्च तद्योग्यान्नपानादीनाञ्चोत्पत्तिर्भवतीत्यर्थः ॥९९॥ सु० ।

---

आकाशादीनां पूर्व्वपूर्व्वस्योत्तरोत्तर प्रति कारणत्वेन स्वस्वकार्य्यापेक्षया व्यापकत्वात् कार्य्यांशसम्वलितत्वेऽपि न कार्य्यगतगुणाश्रयतयाप्यभिव्यक्तिः, किन्तु स्वस्वगुणाश्रयतयैव ; तथा कार्य्याणां स्वकारणापेक्षया अल्पत्वात् तेषां कारणभागसम्मिश्रितानां कारणगुणाश्रयतयाऽपि भवत्यभिव्यक्तिरिति। तथा च लोकेऽनुभवः,—प्रचण्डशब्दो वायुः ; प्रजल्पति ज्वाला ; नदी सङ्कुप्यति ; स्फुट्यमानः पाषाणः क्रोशतीत्यादिः। स्पर्शादीनां तेजःप्रभृतिषु सद्भावोऽविवाद एव। न चैवमनुभवो भ्रान्तिर्व्यवहारदशायां बाधादर्शनात्। तथा च प्रतिनियताश्रया अपि शब्दादयो गुणा यथायथं भूतान्तरेषु अपि उपलभ्यमाना भूतानां पञ्चीकृतत्वं गमयन्तीति ॥ ९८ ॥ वि० ।

एवं भूतारोपं प्रपञ्च्य भौतिकारोपमाह, एतेभ्य इति। भूरादयः प्राणिनां कर्म्मज्ञानफलभोगस्थानविशेषा यथापाठक्रममुपर्य्युपरि वर्त्तमानाः सप्तभूमेरधोऽधश्च पाठक्रमेण वर्त्तमाना अतलादयः सप्तेत्येवं चतुर्द्दश लोकाः। एत एव स्वावरणभूतलोकालोकपर्व्वततद्वाह्यपृथिवीतद्वाह्यसप्तसमुद्रैः सहिता ब्रह्माण्डमित्युच्यते। अस्य च

चतुर्विधस्थूलशरीराणि—जरायुजाण्डजस्वेदजोद्भिज्जाख्यानि ॥ १०० ॥

जरायुजानि—जरायुभ्यो जातानि मनुष्यपश्वादीनि ॥ १०१ ॥

अण्डजानि—अण्डेभ्यो जातानि पक्षिपन्नगादीनि ॥ १०२ ॥

स्वेदजानि—स्वेदेभ्यो जातानि यूकमशकादीनि ॥ १०३ ॥

उद्भिज्जानि—भूमिमुद्भिद्य जातानि लतावृक्षादीनि ॥ १०४ ॥

अत्रापि चतुर्विधस्थूलशरीरम् एकानेकबुद्धि-

---

चतुर्विधशरीराणि उद्दिशति, चतुर्विधेत्यादि ॥ १०० ॥ सु० ।

तानि च यथोद्देशं विवृणोति, जरायुजानीत्यादि ॥ १०१ ॥ सु० ।

पूर्ववदत्रापि समष्टिव्यष्टिभेदं दर्शयति, अत्रापीत्यादि ।

---

परिमाणं श्रुतौ सङ्कीर्त्तितं "द्वात्रिंशतं वै देवरथाह्न्यान्ययं लोकस्तं समन्तं पृथिवी द्विस्तावत्पर्य्येति तां समस्तं पृथिवीं द्विस्तावत्समुद्रः पर्य्येति" [ बृह० उप० ३ अध्या० ३ ब्रा० २ मन्त्रः ] इति ॥ ९९ ॥ विद्व० ।

शरीराणां चातुर्विध्यं स्पष्टयति, शरीराणि इति । यथोद्देशक्रमं शरीराणि लक्षयति, जरायुजानीत्यादिना ।

ननु वैशेषिकाः प्रत्यक्षाप्रत्यक्षवृत्तेरप्रत्यक्षत्वात् पञ्चात्मकत्वं न विद्यत इति वदन्तोऽप्रत्यक्षाभ्यां वाय्वाकाशाभ्यां सह पृथिव्यादिभिरारभ्यमाणानां शरीराणामपि अप्रत्यक्षत्वप्रसङ्गान्न पाञ्चभौतिकं शरीरमित्याहुः ; तत्कथं पञ्चभ्यो भूतेभ्यश्चतुर्विधभूतग्रामस्योत्पत्तिरुच्यत इति चेदत्राहुः,—अस्ति हि शरीरे सर्वेषामपि भूतानां कार्य्यसम्प्रतिपत्तिरव-

विषयतया वनवज्जलाशयवद्वा समष्टिः, वृक्षवज्जलवद्वा व्यष्टिरपि भवति ॥ १०५ ॥

---

चतुर्विधशरीरजातमपि शरीरमित्येकबुद्धिविषयतया वनवत् समष्टित्वं प्रत्येकं तच्छरीरविषयतया अनेकबुद्धिविषयत्वात् व्यष्टित्वञ्च लभते इत्यर्थः ॥ १०५ ॥ सु० ।

---

काशव्यूहनपचनक्लेदनकाठिन्यानां सर्व्वजनानुभवसिद्धत्वात्; अतस्तत् कारणतया पञ्चापि भूतानि एकस्मिन् देहे सन्तीति स्थिते, यदि तेषां भूतानां देहावयवत्वाभावो वृत्तिलाभमात्रतैव स्यात्, तदा तदपगमानपगमाभ्यां देहस्यापचयोपचयौ न स्याताम्। दृश्येते च तयोः सतोरुपचयापचयौ, अतस्तन्तुपटयोरिवावयवावयवित्वमेव पञ्चभूतदेहयोर्युक्तम्। पार्थिवे कार्य्येऽपार्थिवानां भूतानां वृत्तिलाभमात्रत्वे तु तदुपगमापगमाभ्यां तस्योपचयापचयायोगात्। न हि वस्त्रस्य अनारम्भकसलिलद्रव्यार्द्रीकृतस्य तदवस्थायामुपचयस्तदपगमे वापचयोऽस्ति, तदायामविस्तारयोस्तदवस्थात्वदर्शनात्। तथा च जलद्रव्योरपि पावकपवनोपगमापगमाभ्यां परिमाणान्यथात्वं न दृश्यते। तथा च यदि भस्मादाविव पार्थिवे देहे भूतान्तरस्य वृत्तिमात्रता स्यात् तर्हि भस्मादिदेहयोरविशेषेण व्यूहनादीनां सत्त्वमसत्त्वं वा तुल्यवत् प्रसज्येत अदृष्टवदात्मनः संयोगतज्जन्यप्रयत्नादिकारणान्तरस्यापि उभयत्र समानस्यापादयितुं शक्यत्वात्। न च प्रत्यक्षाप्रत्यक्षवृत्तेः शरीरस्याप्रत्यक्षत्वं शङ्कनीयं, प्रत्यक्षाप्रत्यक्षावयववृत्तीनामवयविनामप्रत्यक्षत्वप्रसङ्गात्। न च स्पर्शशून्यत्वादेकद्रव्यत्वाच्चाकाशस्य आरम्भकत्वानुपपत्तिरिति वाच्यम्, आरम्भवादस्यानङ्गीकारादेकस्यापि दुग्धावयविनो दध्यारम्भकत्वदर्शनात्। न च दुग्धावयवैरेव दध्यारभ्यत इति वाच्यं, तथा सति दधिदुग्धयोर्गन्धरसादिवैषम्यं न स्यात्, दुग्धस्यैव सतः परिणामो दधीत्यभ्युपगमे स्याद्गन्धादिवैषम्यम्। स्पर्शशून्यमपि द्रव्यं यथा गुणारम्भकं दृष्टं, तथा द्रव्यारम्भकमप्यस्तु। श्रुतिरपि शरीरस्य सङ्कीर्णद्रव्यारब्धतां श्रावयति "अन्नमशितं त्रेधा विधीयते" [छान्दो० ६ अध्या० ५ खण्ड० १ मन्त्रः] इत्यादौ। याज्ञवल्क्योऽप्याह,— "पञ्च धातून् स्वयं षष्ठ आदत्ते युगपत्प्रभुः" इति [याज्ञ० स्मृति ३ अध्या० ७२ श्लोकः]। वस्तुतस्तु पञ्चानां भूतानां पञ्चात्मकत्वस्य दर्शितत्वादारम्भवादस्य निराकृतत्वाच्च नाचोदयनाद्युक्तदोषशङ्काऽवकाशोऽपीति गमयितव्यं, तस्मात्सिद्धं शरीरं पाञ्चभौतिकमिति। अन्यापि इति स्पष्टार्थः ॥ १००—१०५ ॥ विद्व० ।

एतत् समष्ट्युपहितं चैतन्यं वैश्वानरो विराडिति चोच्यते, सर्वनराभिमानित्वात् विविधं राजमानत्वाच्च ॥ १०६ ॥

अस्यैषा समष्टिः स्थूलशरीरम्, अन्नविकारत्वादन्नमयकोषः, स्थूलभोगायतनत्वाच्च स्थूलशरीरं जाग्रदिति च व्यपदिश्यते ॥ १०७ ॥

---

अधुनाभूरादिचतुर्दश-भुवनान्तर्गत--चतुर्विधस्थूलशरीरसमष्ट्युपहितचैतन्यस्य वैश्वानरत्वापरपर्य्यायं वैराजत्वं दर्शयति, एतत्समष्टीति। तत्र युक्तिमाह, सर्वेत्यादि। सर्वप्राणिनिकायेषु अहमित्यभिमानवत्त्वाद् वैश्वानरत्वं, विविधं नानाप्रकारेण प्रकाशमानत्वाच्च वैराजत्वं लभते इत्यर्थः ॥ १०६ ॥ सु०।

अस्यैषेति। अस्य विराट्चैतन्यस्य एषा पूर्वोक्ता या ब्रह्माण्डान्तर्गतचतुर्विधस्थूलशरीरसमष्टिरेव स्थूलशरीरमित्यर्थः। अन्नविकारेति। अन्नविकारबाहुल्यादन्नमयत्वं, आत्माच्छादकत्वात् कोषत्वं, स्थूलशरीरादिविषयप्रयुक्तसुखदुःखभोगायतनत्वाच्च स्थूलशरीरत्वम्, इन्द्रियैरर्थोपलब्धेश्च जाग्रदवस्थात्वञ्च घटते इत्यर्थः ॥ १०७ ॥ सु०।

---

स्थूलसमष्ट्युपहितस्य चैतन्यस्य व्यपदेशभेदानाह, एतत्समष्ट्युपहितमिति। चकारात्पुरुषादिशब्दग्रहः। उच्यते,—"यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" [ छान्दो० ५ अध्या० १८ खण्ड० १ मन्त्रः ] "सैषा विराडन्नादी" [ छान्दो० ४ अध्या० ३ खण्ड० ८ मन्त्रः ] "पुरुष एवेदं" [ श्वेता० ३ अध्या० १५ मन्त्रः ] इत्यादिश्रुतिभिरिति शेषः। तत्र हेतूनाह, सर्वनरेति। सर्व्वशब्दो विश्वपदपर्य्यायः। विश्वनराभिमानित्वाद्वैश्वानरः। विविधं राजमानत्वाद्विराट्। चकारात्पूर्णत्वात्पुरुष इति च द्रष्टव्यम् ॥ १०६ ॥ विद्व०।

उपहितस्य व्यपदेशानुक्त्वा उपाधेरपि तानाह, अस्यैषेति। "अन्नं वै विराट्"

एतद्व्यष्ट्युपहितं चैतन्यं विश्व इत्युच्यते, सूक्ष्मशरीराभिमानमपरित्यज्य स्थूलशरीरादिप्रविष्टत्वात् ॥ १०८ ॥

---

चतुर्विधस्थूलशरीरसमष्ट्युपहितं चैतन्यं सप्रपञ्चमभिधाय इदानीं तद्व्यष्ट्युपहितं चैतन्यमभिधत्ते, एतद्व्यष्टीति। एतेषां चतुर्विधशरीराणां या व्यष्टिस्तत्तच्छरीरव्यक्तिस्तदुपहितं चैतन्यं विश्व इत्युच्यते इत्यर्थः। तत्र हेतुमाह, सूक्ष्मेत्यादि। सूक्ष्मलिङ्गशरीराभिमानमपरित्यज्य स्थूलशरीरेषु प्रविश्य तत्तत्स्थूलशरीरेषु सर्वेषु प्रत्येकमहमहमित्यभिमानवत्त्वाद्विश्वत्वम् इत्यर्थः ॥ १०८ ॥ सु०।

---

[तैत्ति० ब्राह्म० १।६।३।४] इति श्रुतेरन्नविकारत्वम्। स्थूलभोगोऽतिस्पष्टो भोगः ॥ १०७ ॥ विद्व०।

एवं समष्टिस्थूलतदुपहितचैतन्ययोर्व्यपदेशभेदं दर्शयित्वा व्यष्टिस्थूलतदुपहितयोरपि तमाह, एतद्व्यष्टीति। व्यष्टिस्थूलशरीरोपहितस्य विश्वशब्दवाच्यत्वे हेतुमाह, सूक्ष्मेति। सूक्ष्मशरीरं कारणशरीरं तदपरित्यज्य स्थूलशरीरादौ तदपेक्षया स्थूलशरीरं लिङ्गशरीरं तदादिर्यस्य परमस्थूलशरीरस्येति तद्गुणसंविज्ञानो बहुव्रीहिस्तस्मिन् प्रविष्टत्वात्। तथा हि जीवस्य त्रय उपाधयः। सुषुप्त्यादौ बुद्ध्यादिसंस्कारोपरञ्जितमज्ञानमात्रमुपाधिः। स्वप्ने जाग्रद्वासनामयं लिङ्गशरीरमुपाधिः। जाग्रदवस्थायां तु सूक्ष्मशरीरसंसृष्टस्थूलशरीरमुपाधिः। तथा च पूर्व्वपूर्व्वोपाधिविशिष्टस्यैवोत्तरोत्तरोपाधिप्रवेशात् सर्वशरीरप्रविष्टत्वेन स्थूलभोगायतनाभिमानिनो विश्व इति संज्ञेति। यद्वा,—सूक्ष्मशरीरं लिङ्गशरीरं तदपरित्यज्य स्थूलशरीरं विराड्व्यष्टिस्तदादिर्येषां चक्षुरादिवृत्तीनां तत्तद्विषयाकाराणां च तत्प्रविष्टत्वादिति हेतुयोजना। स्थूलशरीरमपरित्यज्येति क्वचित्पाठे—स्थूलशरीरे वर्त्तमानस्यैव सूक्ष्मशरीरकारणशरीरयोरप्यनुगतत्वादिति हेत्वर्थोऽनुसन्धेयः। सर्व्वथा विश्वशरीरवर्त्तित्वाद्विश्व इत्युक्तं भवतीति भावः ॥ १०८ ॥ विद्व०।

अस्याप्येषा व्यष्टिः स्थूलशरीरम्, अन्नविकारत्वाद् एव हेतोः अन्नमयकोषः, स्थूलभोगायतनत्वाद् स्थूलशरीरं जाग्रदिति चोच्यते ॥ १०९ ॥

तदानीमेतौ विश्ववैश्वानरौ, दिग्वातार्कप्रचेतोऽश्विभिः क्रमान्नियन्त्रितेन श्रोत्रादीन्द्रियपञ्चकेन क्रमाच्छब्दस्पर्शरूपरसगन्धान् ॥ ११० ॥

अग्नीन्द्रोपेन्द्रयमप्रजापतिभिः क्रमान्नियन्त्रितेन वागादीन्द्रियपञ्चकेन क्रमाद्वचनादानगमनविसर्गानन्दान् ॥ १११ ॥

---

अस्यापीति । अस्य विश्वचेतनस्याप्येषा तत्तच्छरीरव्यक्तिविशेषलक्षणा व्यष्टिः सैव स्थूलशरीरमित्यर्थः । अत्रापि अन्नविकारबाहुल्यादन्नमयत्वं, चैतन्याच्छादकत्वात् कोषत्वम्, इन्द्रियैरर्थोपलम्भात् जाग्रत्त्वञ्च क्रमेण दर्शयति, अन्नविकार इति ॥ १०९ ॥ सु० ।

अधुना जाग्रदवस्थायां विश्ववैश्वानरयोस्तत्तद्देवताऽधिष्ठितश्रोत्रादिभिश्चतुर्दशभिः करणैः शब्दादिविषयग्रहणप्रकारं दर्शयति, तदानीमेताविति ॥ ११० । १११ ॥ सु० ।

---

अस्यापि इति पूर्ववत् । एवेति व्यष्टिरुच्यते ॥ १०९ ॥ विद्व० ।

पूर्ववद्विश्ववैश्वानरयोरपि जाग्रदित्यवस्थापन्नं भोगविशेषं सप्रकारं प्रपञ्चयति, तदानीमित्यादिना । दिगादिपञ्चदेवतानियन्त्रितेन श्रोत्रादीन्द्रियपञ्चकेन यथापाठक्रमं शब्दादिगन्धान्तान् स्थूलविषयाननुभवत इति प्रत्येकं योजनीयम् ॥ ११० ॥ विद्व० ।

अग्न्यादिदेवतापञ्चकनियन्त्रितेन वागादिपञ्चकेन वचनाद्यानन्दान्तान् ॥ १११ ॥ विद्व० ।

चन्द्रचतुर्मुखशङ्कराच्युतैः क्रमान्नियन्त्रितेन मनोबुद्ध्यहङ्कारचित्ताख्येन अन्तरिन्द्रियचतुष्केण क्रमात् सङ्कल्पनिश्चयाहङ्कार्य्यचैत्तांश्च सर्वानेतान् स्थूलविषयाननुभवतः "जागरितस्थानो वहिःप्रज्ञः" [ माण्डू० ३ ] इत्यादिश्रुतेः ॥ ११२ ॥

अस्मिन्नर्थे श्रुतिं संवादयति, जागरितेत्यादि ॥ ११२ ॥ सु० ।

तथा चन्द्रादिदेवताचतुष्टयनियन्त्रितेन मन आदिचतुष्केण सङ्कल्पादिचैत्यान्तांश्चतुरः। सर्वानेतानिति। यथायथं यथोक्तक्रमानुरोधेन सर्वानेतान् स्थूलभोगान् विषयाननुभवत इत्यर्थः। अत्रापि प्रमाणमाह, जागरित इति। आदिशब्दात् "स्थूलभुग्वैश्वानरः" [ माण्डू० ३ ] इति वाक्यशेषग्रहः।

इदमत्र वोद्धव्यम्।—जाग्रदवस्थायां हि प्रमातृप्रमाणप्रमेयव्यवहारा भवन्ति ; तत्र प्रमाणैर्योऽर्थं प्रमिणोति स प्रमाता, येन प्रमिणोति तत्प्रमाणं, यत्प्रमीयते तत्प्रमेयमिति सर्व्वतन्त्रसिद्धान्तः। तत्र यः प्रमाता जीवश्चेतनः स विषयं प्रमिण्वन् कया प्रत्यासत्त्या प्रमिणोतीति विचारणीयम्। आत्ममनइन्द्रियविषयाणां क्रमेण संयोगपरम्परयेति चेत् न, विषयसंयुक्ततत्संयुक्तेष्वपि संयोगपरम्परया युगपत्सर्वावभासप्रसङ्गात्। यावदिन्द्रियसम्बन्धस्तावदेव हि भासत इति नातिप्रसङ्ग इति चेत् न, इन्द्रियसन्निकर्षस्यापीयत्तानवधारणात्। इन्द्रियसन्निकर्षानन्तरं योऽर्थः स्फुरति तावन्मात्रं सन्निकृष्यत इति चेत् न, इन्द्रियसन्निकर्षस्येयत्तावधारणात् स्फुरणस्य विषयनियमः तस्मिन् सतीन्द्रियसन्निकर्षेयत्तावधारणमिति परस्पराश्रयात्। किञ्चोक्तसन्निकर्षस्य ज्ञानोत्पत्तिमात्रे क्षूप्तत्वात् तदनन्तरं तस्यावस्थाने कल्पकाभावान्न ज्ञानस्य विषयेण सह सम्बन्धः स्यात्। तथा च मयेदं विदितमिति स्वात्मनि सम्बन्धानुसन्धानाभावप्रसङ्गः। न चाश्रयद्वारा सम्बन्ध इति वाच्यं, ज्ञानस्य सर्व्वगतात्माश्रयत्वे युगपत् सर्वविषयसम्बन्धात् सर्वावभासप्रसङ्गः। देहावच्छिन्नात्मप्रदेशाश्रितत्वे देहस्य वाह्यविषयासम्बन्धान्न वाह्यं किञ्चिदपि भायात्। ननु सम्बन्धाभावेऽपि ज्ञानज्ञेययोरुद्दिष्टे विषये ज्ञानमतिशयं जनयतीति नाव्यवस्थेति चेत् न, अनुद्दिष्टेष्वपि दुर्गन्धादिषु ज्ञानकृतातिशयदर्शनात्। अदृष्टवशात्किञ्चिदेव भासत इति चेत् न, तस्य दृष्टसामग्रीसम्पादकत्वेनान्यथासिद्धत्वादगतिकत्वाच्च। तस्मान्न किञ्चिदेतत्। अतो वक्तव्या जीवस्य विषय-

ग्रहणव्यवहारे व्यवस्थेति। तदुच्यते।—न तावदस्मन्मतेऽनुपपत्तिरस्ति यतो जीवस्य सर्व्वगतत्वासर्व्वगतत्वपक्षयोरप्यन्तःकरणकृता व्यवस्था सम्भवति; तथा हि अपरिच्छिन्नपक्षे तावदन्तःकरणमेव मनोबुद्ध्यादिशब्दवाच्यं प्रमातृत्वादिव्यवहारापादकम्। यतोऽविद्यावृततया सर्व्वत्राप्रकाशमानमप्यात्मचैतन्यमन्तःकरणसंसृष्टं सदवभासते दर्पणद्रव्यसंसृष्टरविरश्मिवत्। तच्चान्तःकरणमदृष्टादिसहायं विषयसंवेदनवेलायां तडागकुल्याक्षेत्रगतोदकप्रवाहवत् देहतद्वाह्यदेशतद्गतविषयानभिव्याप्य अवतिष्ठते। तत्र च तिसृषु अप्यवस्थास्वात्मचैतन्यं तदात्मनैवाभिव्यज्यते। तत्र देहमध्यान्तःकरणभागावच्छिन्नं चैतन्यं प्रमातृसंज्ञां लभते। देहविषययोर्मध्ये दीर्घप्रभाकारेणेन्द्रियद्वारा निर्गतान्तःकरणभागावच्छिन्नं प्रमाणसंज्ञाम्। विषयमभिव्याप्य विषयाकारतयावस्थितान्तःकरणभागावच्छिन्नं प्रमेयसंज्ञाम्। इति प्रमातृप्रमाणप्रमेयव्यवस्थोपपत्तिः।

एवमभ्युपगमे येन विषयेण सहेन्द्रियस्य सन्निकर्षो दूरे वान्तिके वावतिष्ठमानेन तत्रैव तदाकारमेवान्तःकरणं परिणमते, नान्यत्र नान्याकारमिति च उपलभ्यते। तदनुरक्तचैतन्यात्मनयैकत्वान्मयेदं विदितमिति सम्बन्धावभासश्चोपपद्यते, नान्यथा। परिच्छिन्नात्मपक्षेऽपि जीवत्वोपाध्यन्तःकरणस्य पूर्व्वोक्तप्रकारेणावस्थाभेदसम्भवे उपाध्यनुगामित्वादुपहितस्य स्वोपाध्यन्तःकरणं यद्यदात्मनावतिष्ठते, तत्तदात्मना प्रत्यगात्मचैतन्यमप्यवभासमानं ग्राह्यग्रहणग्राहकभेदव्यवस्थामनुभवत्यग्निरिवायःपिण्डादिसमारूढ़ इत्यनवद्यम्। न चेयं कल्पना तार्किककल्पनावत्पुरुषबुद्ध्युत्प्रेक्षामूला, किन्तु श्रुतिमूला। तथा च श्रुतयः,—"स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव स हि स्वप्नो भूत्वेमं लोकमतिक्रामति" [ वृह० उप० ४ अध्या० ३ ब्रा० ७ मन्त्रः ] "नवद्वारे पुरे देही हंसो लेलायते वहिः" [ श्वेता० उप० ३ अध्या० १८ मन्त्रः ] "आसीनो दूरं व्रजति" [कठ० उप० १ अध्या० २ वल्ली० २० मन्त्रः ] "विज्ञानमयो मनोमयः" [ वृह० उप० ४ अध्या० ४ ब्रा० ५ मन्त्रः ] इत्यादयः। उक्तञ्च भगवत्पादैः सर्व्वश्रुत्यर्थसङ्ग्रहे दक्षिणामूर्त्तिस्तोत्रे,—"नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं ज्ञानं यस्य तु चक्षुरादिकरणद्वारा वहिः स्पन्दते। जानामीति तमेव भान्तमनुभात्येतत्समस्तं जगत् तस्मै श्रीगुरुमूर्त्तये नम इदं श्रीदक्षिणामूर्त्तये॥" युक्तिरपि मनसो वाह्यविषयदेशगमनाभावे इन्द्रियसन्निकर्षपरम्परया देहान्तरे च विषयाकारतास्वीकारे वहिरेतावति दूरेऽयं विषयो मयोपलब्ध इति प्रतिसन्धानं न स्यात्। अनेकायामविस्तीर्णदेशतन्निष्ठरथगजाद्याकारभावस्यान्तर्हृदयेऽनुपपत्तेः। न च स्वप्नवदुपपद्यत इति वाच्यं, स्वप्नस्य मायामयस्योक्तत्वात्। जाग्रदपि मायामयमेवेति चेत् सत्यं, तथापि स्वप्नाद्यवहारभेद-

अत्राप्यनयोः स्थूलव्यष्टिसमष्ट्योस्तदुपहितयोर्विश्ववैश्वानरयोश्च वनवृक्षवत् तदवच्छिन्नाकाशवच्च जलाशयजलवत् तद्गतप्रतिबिम्बाकाशवच्च वा पूर्ववदभेदः ॥ ११३ ॥

---

अनयोः विश्ववैश्वानरयोः वनवृक्षावच्छिन्नाकाशदृष्टान्तेन जलाशयजलगतप्रतिबिम्बाकाशदृष्टान्तेन च पूर्ववदभेदं साधयति, अत्राप्यनयोरिति ॥ ११३ ॥ सु० ।

---

सिद्धये तयोः कियदप्यस्ति वैषम्यं सति प्रमातरि बाध्यमानत्वाबाध्यमानत्वाभिमानादिलक्षणम्। नन्वखण्डब्रह्माकारा वृत्तिरन्तरेव जायत इति चेद्बाढं, सा हि देहाद्यावरणमुपमर्दयन्ती जायते, बाह्यविषया तु नैवमिति वैषम्यं स्यात्। किञ्च, यदि विषयेन्द्रियसम्बन्धमात्रमन्तःकरणस्य विषयाकारताहेतुस्तदा दूरवर्त्तिविषयगतपरिमाणरूपसंख्यादीनामपि तदाकाराकारितेऽन्तःकरणे यथावदवभासप्रसङ्गः। न च दूरत्वलक्षणाद्दोषात्तथा नावभासत इति वाच्यं, तस्येन्द्रियसम्बन्धमात्रे प्रतिबन्धकत्वाभावात्। ननु तवापीन्द्रियसंसृष्टाकारता मनस इति स्थिते, कथं दूरस्थविषयेयत्ताद्याकारता मनसो न भवेदिति चेत्, मैवं, मम तु मनसो बहिरस्वातन्त्र्याद्यावद्भिरवयवैरवयविभिर्वा चक्षुःसन्निकर्षस्तावन्मात्राकारमेव मनः परिणमत इति स्वीक्रियते। तव तु पदार्थसन्निकृष्टेन्द्रिये सति तद्गतभूयस्त्वाल्पत्वदृढादृढत्वविशेषानादरेऽप्यन्तस्तदाकारवृत्त्युदयोपपत्तेर्विषयेयत्तादेरपि स्फुरणं प्रसज्येतेति वैषम्यं स्यात्, तस्मादस्ति प्रत्यक्षव्यवहारे बाह्यमनोवृत्तिर्विषयाकारेति स्थितम्। परोक्षव्यवहारे तु—विशिष्टशब्दलिङ्गादिबलनिबन्धनात् तत्तदर्थाकारा धीरन्तरेव समुन्मिषति विषयसत्तामात्रस्यैव तत्र स्फुरणात् तद्गतविशेषादेरस्फुरणाच्चेति दिक्। तथा च स्वप्नावस्थायामात्मा बुद्ध्युपाधिः स्वप्नदर्शनहेतुकर्मक्षये जागरितमागच्छन् पूर्व्वगृहीतेषु करणेषु पुनः स्वस्वगोलकस्थानेषु तयैव बुद्ध्या प्रसारितेषु सत्सु स्वयं तद्बुद्ध्यनुगतः तत्तद्गोलकादिदेशं गच्छन् स्थूलोपाध्यन्तःकरणेन्द्रियसचिवः तत्तदिन्द्रियविषयाननुमेयांश्च स्थूलान् व्यावहारिकान् पदार्थाननुभवति। तदिदमस्य जागरितम्। तदुक्तं—"इन्द्रियैरर्थोपलब्धिर्जागरितम्" इति। अयमेव विश्ववैश्वानरात्मनः स्थूलभोग इति ॥ ११२ ॥ विद्व० ।

अत्राप्यनयोः स्थूलइत्यादि पूर्व्ववत् ॥ ११३ ॥ विद्व० ।

एवं पञ्चीकृतपञ्चभूतेभ्यः स्थूलप्रपञ्चोत्पत्तिः॥११४॥

एषां स्थूलसूक्ष्मकारणप्रपञ्चानामपि समष्टिरेको महान् प्रपञ्चो भवति, यथा अवान्तरवनानां समष्टिरेकं महद्वनं भवति, यथा वा अवान्तरजलाशयानां समष्टिरेको महान् जलाशयः ॥ ११५ ॥

एतदुपहितं विश्ववैश्वानरादीश्वरपर्य्यन्तं चैतन्यमपि अवान्तरवनावच्छिन्नाकाशवद् अवान्तरजलाशयगतप्रतिविम्बाकाशवच्च एकमेव ॥ ११६ ॥

---

स्थूलप्रपञ्चोत्पत्तिमुपसंहरति, एवं पञ्चीकृतेति ॥ ११४॥ सु०।

स्थूलसूक्ष्मकारणप्रपञ्चानां व्यष्टिभूतानां प्रत्येकविवक्षया अवान्तरप्रपञ्चत्वमभिधाय इदानीं तेषां समष्टेरेव महाप्रपञ्चत्वं दर्शयति, एषामिति। अत्र दृष्टान्तमाह, यथाऽवान्तरेति। यथा धवखदिरपलाशाद्यवान्तरवनानां समष्टिः समुदायविवक्षया एकं महद्वनं भवति, यथा च वापीकूपतड़ागाद्यवान्तरजलाशयानां समुदायविवक्षया एको महान् जलाशयो भवति, तथा स्थूलसूक्ष्मकारणावान्तरप्रपञ्चानां समुदायः एको महान् प्रपञ्चो भवतीत्यर्थः ॥ ११५ ॥ सु० ।

एतदेवावान्तरमहाप्रपञ्चोपहितानां विश्वतैजसप्राज्ञानां वैश्वानरहिरण्यगर्भाव्याकृतानाञ्च अवान्तरवनावच्छिन्नाकाशवत् अवान्तरजलाशय-जलगत-प्रतिविम्बाकाशवच्चाभेद इत्याह, एतदुपहितमित्यादि ॥ ११६ ॥ सु० ।

---

स्थूलप्रपञ्चाध्यासं सावस्थमुपपादितमुपसंहरति, एवमिति ॥ ११४ ॥ विद्व०।

उक्तं प्रपञ्चत्रयं तदुपहितचैतन्यत्रयञ्च पूर्ववत् सदृष्टान्तमेकीभावमापादयति, "एषाम्" इत्यारभ्य "आभ्याम्" इत्यतः प्राक्तनेन ग्रन्थेन। स्पष्टार्थोऽयं ग्रन्थः॥ ११५।११६ ॥ विद्व०।

आभ्यां महाप्रपञ्चतदुपहितचैतन्याभ्यां तप्तायः-पिण्डवदविविक्तं सत् अनुपहितं चैतन्यं "सर्वं खल्विदं ब्रह्म" [ छान्दो० ३ अध्या० १४ खण्ड० १ मन्त्रः ] इति महावाक्यस्य वाच्यं भवति, विविक्तं सल्लक्ष्यमपि भवति ॥ ११७ ॥

एवं वस्तुनि अवस्त्वारोपोऽध्यारोपः सामान्येन प्रदर्शितः ॥ ११८ ॥

इदानीं प्रत्यगात्मनि इदमिदमयमयमारोपयतीति विशेषत उच्यते ॥ ११९ ॥

---

चैतन्यप्रपञ्चयोर्भेदे "सर्वं खल्विदं ब्रह्म" इति श्रुत्या विरोधमाशङ्क्य परिहरति, आभ्यामित्यादि। उक्तमहत्प्रपञ्चतदवच्छिन्नचैतन्याभ्यां तप्तायःपिण्डवदन्योन्यतादात्म्याध्यासापन्नं यद्वस्तु श्रुतं तदवच्छिन्नं चैतन्यं सर्वं खल्विदं ब्रह्मेति महावाक्यस्य वाच्यं भवति, अन्योन्यतादात्म्याध्यासेन विविक्तं सत् लक्ष्यं भवतीत्यर्थः ॥ ११७ ॥ सु०।

अध्यारोपप्रकरणमुपसंहरति, एवं वस्तुनीति ॥ ११८ ॥ सु०।

ईश्वरचैतन्ये सामान्यतो महाप्रपञ्चाध्यारोपप्रकारं सप्रपञ्चमभिधाय इदानीं प्रत्यगात्मनि विशेषाध्यारोपप्रकारं दर्शयितुम् उपक्रमते, इदानीमित्यादिना।

---

फलितमाह आभ्यामिति ॥ ११७ ॥ विद्व०।

तत्पदार्थविषयमध्यारोपमुपसंहरति, एवमिति ॥ ११८ ॥ विद्व०।

अधुना त्वम्पदार्थविषयमध्यारोपं बहुवादिमतोपन्यासेन दर्शयति, इदानीम् इति ॥ ११९ ॥ विद्व०।

अतिप्राकृतस्तु "आत्मा वै पुत्र नामासि" [ कौषी० २ अध्या० ११ मन्त्रः ] इत्यादिश्रुतेः स्वस्मिन्निव स्वपुत्रेऽपि प्रेमदर्शनात्, पुत्रे पुष्टे नष्टे चाहमेव पुष्टो नष्टश्चेत्याद्यनुभवाच्च, पुत्र आत्मेति वदति ॥ १२० ॥

चार्वाकस्तु "स वा एष पुरुषोऽन्नरसमयः"

---

अध्यारोपमेवाह, इदमिति। प्रत्यक्षादिसन्निहितस्यापत्यादिधर्मिणः इदमिदमिति निर्देशः क्रियते। इदमिदमित्यादेरेव वीप्सा। तथा च अतिस्थूलबुद्धिस्तु इदमपत्यादिकमेवाहम् अयं पुत्र एवाहमित्यत्यन्तबाह्यधर्मानविशेषेण आत्मनि अध्यारोपयतीत्यर्थः ॥ ११९ ॥ सु०।

अत्र श्रुतिमाह, आत्मेत्यादि। तत्र युक्तिमाह, स्वस्मिन्निवेत्यादि। यथा स्वशरीरे प्रेमदर्शनादात्मत्वभ्रमः, एवं स्वपुत्रादीनां शरीरेऽपि प्रेमदर्शनात् आत्मत्वभ्रम इत्यर्थः। अत्रानुरूपमनुभवमाचष्टे, पुत्र इति ॥ १२० ॥ सु०।

एतदपेक्षया विशिष्टबुद्धिः अन्यः कश्चिदधिकारी स्वदेहमेव आत्मानं मन्यते इत्याह, चार्वाकस्त्विति। अत्रापि श्रुतिमाह,

---

तत्राऽरुन्धतीप्रदर्शनन्यायेन मुञ्जादिषीकाग्रहणन्यायेन वा प्रत्यक्षं देहादिविविक्तं चिदेकतानमात्मानं दिदर्शयिषुरतिमूढमतेर्मतं तावदाह, अतिप्राकृत इति। अतिप्राकृतस्तु पुत्र आत्मेति वदतीत्यन्वयः। कुत इत्यपेक्षायां श्रुतियुक्त्यनुभवाभासान् क्रमेण प्रमाणयति "आत्मा वा" इत्यादिना। स्वस्मिन्निवेति युक्तिकीर्त्तनं लोके हि पुत्रेण इष्टमिष्टं खाद्यादि स्वात्मवचनेनापि पुत्रेषु समर्पयन्तस्तेषु परमप्रेम कुर्व्वन्तस्तेषामात्मत्वमेव प्रकटयन्तीति भावः। पुत्रे नष्ट इत्याद्यनुभवोक्तिः ॥ १२० ॥ विद्व०।

मतान्तरमाह, चार्वाक इति। स्थूलशरीरमात्मेति वदतीत्यन्वयः। अत्रापि

[तैत्ति० उप० २वल्ली० १अनु० १मन्त्रः] इत्यादि-श्रुतेः प्रदीप्तगृहात् स्वपुत्त्रं परित्यज्यापि स्वस्य निर्गमदर्शनात्, "स्थूलोऽहं" "कृशोऽहम्" इत्याद्यनुभवाच्च, स्थूलशरीरमात्मेति वदति ॥ १२१ ॥

अपरश्चार्वाकः "ते ह प्राणाः प्रजापतिं पितरमेत्योचुः" [छान्दो० ५अध्या० १खण्ड० ७ मन्त्रः]

---

"स वा" इत्यादि। पुत्त्रादिशरीरस्य आत्मत्वाभावे युक्तिं दर्शयन् पूर्वोक्ताधिकारिणः सकाशात् स्वस्य वैलक्षण्यं दर्शयति, प्रदीप्तेत्यादि। देहस्य आत्मत्वे अनुभवञ्च प्रमाणयति, स्थूलोऽहमिति ॥ १२१ ॥ सु०।

ततोऽप्युत्कृष्टः कोऽपि अधिकारी श्रुतियुक्त्यनुभवेभ्यः इन्द्रियाणि आत्मेति वदतीत्याह, अपर इति ॥ १२२ ॥ सु०।

---

श्रुत्यादिप्रमाणं वदन् प्रागुपन्यस्तपक्षे दूषणं सूचयति, "स वा एष" इत्यादिना। एवमेवोत्तरेष्वपि पक्षेषु प्रमाणादिग्रन्थोत्थानं द्रष्टव्यम्। स वै य ओषधीनां रेतोरूपेण परिणतानां परिणामः प्रसिद्धः, एष प्रत्यक्षः पुरुषः शिरःपाण्याद्यात्मकोऽन्नरसमयोऽन्नरसविकारोऽन्नरसेनैवोपचीयमानत्वादिति श्रुतेरर्थः। इह पुरुषशब्दस्य लोके आत्मनि प्रयोगात् तस्य च श्रुतावन्नरसमये देहे प्रयुक्तत्वात् देह आत्मेति गम्यत इत्यभिप्रायः। परमप्रेमगोचरत्वमात्मन्येव विश्रान्तमितरस्य सर्व्वस्यापि तच्छेषत्वेनैव प्रियत्वात्। "तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्व्वस्मादन्तरतरं यदयमात्मा" [वृह० उप० १ अध्या० ४ ब्रा० ८ मन्त्रः] इति श्रुतेश्च। सा च प्रीतिः पुत्रादपि देहेऽधिकतरा निरतिशया च दृष्टा; अन्यथा दह्यमाने गृहादौ हन्तृषु चोपस्थितेषु पुत्रं परित्यज्य स्वस्य पलायनानुपपत्तेरिति युक्त्यर्थः। अहम्प्रत्यय आत्मानमवगाहत इति सर्व्ववादिनामविवादः; स च "कृशोऽहम्" इत्यादिना देहावलम्बनोऽनुभूयतेऽतो देह एवात्मेत्यर्थः ॥ १२१ ॥ विद्व०।

लोकायतानां चार्वाकविशेषाणां मतभेदानाह, अपरश्चार्वाक इत्यादिना वीक्ष्यत: प्राक्तनेन ग्रन्थेन। अन्वयादि पूर्व्ववत्। प्राणानां वागादीनां प्रज्ञा-

इत्यादिश्रुतेः इन्द्रियाणामभावे शरीरचलनाभावात्, "काणोऽहं" "बधिरोऽहम्" इत्याद्यनुभवाच्च, इन्द्रियाण्यात्मेति वदति ॥ १२२ ॥

अन्यस्तु चार्वाकः "अन्योऽन्तर आत्मा प्राणमयः" [ तैत्ति० उप० २ वल्ली० २ अनु० ] इत्यादिश्रुतेः, प्राणाभावे इन्द्रियादिचलनायोगात्

---

ततोऽप्युत्तमोऽधिकारी कश्चित् श्रुतिप्रमाणानुभवबलात् प्राण एवात्मेत्याह, अन्यस्त्विति ॥ १२३ ॥ सु० ।

---

प्रतिगमनं तं प्रति प्रश्नकरणं चाचेतनत्वे न सम्भवतीत्यनुपपत्त्या तेषां चैतन्यमवश्यम्भावीति श्रुतार्थापत्तिरिह मानं न श्रुतिरेवेति द्रष्टव्यम्। इन्द्रियाणामभावे उपरमे स्वापादौ देहचलनस्य चैतन्यकार्य्यस्य अदर्शनात् तदनुपरमे च तद्दर्शनादन्वयव्यतिरेकाभ्यामिन्द्रियाण्येव चेतनानि न देह इति निश्चीयते। न च तेषां करणत्वेनापि ज्ञानान्वयव्यतिरेकोपपत्तौ तदाश्रयत्वकल्पनमयुक्तमिति वाच्यम्, आश्रयसिद्ध्युत्तरकालीनत्वात् करणत्वकल्पनायास्तस्य चाश्रयत्वस्य देहेऽद्याप्यसिद्धेर्नान्यथोपपत्तिः। अत इन्द्रियाण्येवात्मानः काणत्वादेश्चाहमालम्बनत्वमबाधितम्। देहे तु ममप्रत्ययबाधितत्वान्नाक्तमिति भावः ॥ १२२ ॥ विद्व० ।

मुख्यप्राणात्मवादिमतमुत्थापयति, अन्यस्त्विति। अन्योऽन्नमयादात्मन इति योजना। स चान्नमयादन्तरोऽभ्यन्तर इत्यर्थः। प्राणाभावे प्राणस्य स्वस्थितिनिबन्धनान्नाद्यलाभेन कृशीभावे सतीन्द्रियाणां विद्यमानानामपि स्वस्वविषये प्रवृत्त्यदर्शनात् सति च तस्मिन् पुष्टे तद्दर्शनात् प्राण एवात्मा न प्राणाधीनस्थितिकानीन्द्रियाणीति। इन्द्रियाणां चैतन्यान्वयव्यतिरेकः करणत्वेनाप्युपपद्यत एव। तेषामेव कर्त्तृत्वे करणाभावप्रसङ्गः। किञ्चैकस्मिञ्छरीरे इन्द्रियाणां सम्भूय भोक्तृत्वं प्रत्येकं वा। द्वितीयेऽपि युगपत्क्रमेण वा। नाद्यः; रूपादौ चक्षुरादिभोग्ये जिह्वादीनां भोक्तृत्वादर्शनात्। न हि सम्भूयेन्द्रियाण्येकं कार्य्यं निर्वर्त्तयन्ति, तेषां प्रतिनियतासाधारणविषयभेदस्यान्वयव्यतिरेकसिद्धत्वात्। न द्वितीयः; उक्तेन प्रकारेण यौगपद्यासम्भवात्। प्रत्येकं क्रमेण भोक्तृणीन्द्रियाणीति तृतीयेऽपि पक्षे

"अहमशनायावान्" "अहं पिपासावान्" इत्याद्यनुभवाच्च, प्राण आत्मेति वदति ॥ १२३ ॥

अन्यस्तु चार्वाकः "अन्योऽन्तर आत्मा मनोमयः" [ तैत्ति० २ वल्ली० ३ अनु० ] इत्यादिश्रुतेः मनसि सुप्ते प्राणादेरभावात्, "अहं सङ्कल्पवान्" "अहं विकल्पवान्" इत्याद्यनुभवाच्च, मन आत्मेति वदति ॥ १२४ ॥

---

ततो विशिष्टाधिकारी कश्चित् स्वमतानुकूलश्रुत्यादिबलात् मन एवात्मेत्याह, इतरस्त्विति ॥ १२४ ॥ सु० ।

---

तेषां प्रत्येकं स्वातन्त्र्ये कदाचिदनैकमत्ये सति विरुद्धादिक्रियैस्तैरधिष्ठितं शरीरं विदीर्य्येत। अस्वातन्त्र्ये यदधीनत्वं तेषां तस्यैवात्मत्वं युक्तं, स्वामिभृत्यन्यायस्य शरीरैक्येऽनुपपत्तेः। प्राण एव तु मुख्यः सर्वेषामिन्द्रियाणामाश्रय इति युक्तम्, अतः स एवात्मा स्वापप्रबोधयोरविच्छिन्नस्वभावः। प्रत्येकमिन्द्रियाणामात्मत्वेऽन्यदृष्टेऽन्यस्मरणानुपपत्तेः, इह च यश्चक्षुषा रूपमद्राक्षं स इदानीं गन्धं जिघ्रामीति प्रत्यभिज्ञा दृश्यते। तस्मान्नेन्द्रियाण्यात्मान इति भावः। अशनायापिपासयोश्च प्राणधर्म्मत्वं, प्रसिद्धमन्नपानयोरलाभे प्राणविच्छेददर्शनात्। तादृग्धर्म्मकश्च प्राणोऽहम्प्रत्ययविषय इति प्राण आत्मेत्यनुभव इत्यर्थः ॥ १२३ ॥ वि०।

मन आत्मवादिमतमुत्थापयति, अन्यस्त्विति। प्राणमयादन्योऽन्तर आत्मेति यावत्। मनसि सुप्ते विलीने प्राणादेरभावाद्दृतिवच्छ्वासोच्छ्वासदर्शनस्य द्रष्टृदृष्ट्यध्यारोपितत्वादिन्द्रियाभावेऽपि स्वप्नस्मृत्योर्मनसि सम्प्रतिपत्तेर्मन एवात्मेत्यर्थः; यद्वा,—प्राणादेरभावादिति तद्व्यापारोपरमे सुषुप्त्यादौ तस्याभावमुपचर्य्येदमुच्यते। तथा चेन्द्रियेषूपसंहृतव्यापारेषु प्राणे चोपसंहृतप्राणनापाननेतरवृत्तौ मनसैव केवलेन स्वप्नादेरुपलम्भान्मन एवात्मेत्यर्थः। मनसश्च सङ्कल्पादिधर्म्मवत्त्वं प्रसिद्धमित्यनुभवोक्तिः स्पष्टार्था ॥ १२४ ॥ वि०।

बौद्धस्तु "अन्योऽन्तरआत्मा विज्ञानमय:" [ तैत्ति० २ वल्ली० ४ अनु० ] इत्यादिश्रुते: कर्त्तुरभावे करणस्य शक्त्यभावात्, "अहं कर्त्ता" "अहं भोक्ता" इत्याद्यनुभवाच्च, बुद्धिरात्मेति वदति ॥ १२५ ॥

प्राभाकरतार्किकौ तु "अन्योऽन्तर आत्मा

---

उक्तेभ्य: पञ्चभ्यो विलक्षण: कश्चिद्विज्ञानवादी श्रुत्यादिभि: विज्ञानमात्मेत्याह, बौद्धस्त्विति ॥ १२५ ॥ सु० ।

उक्तेभ्योऽतिरिक्तौ प्राभाकरतार्किकौ स्वमतोपयोगिश्रुत्यादिबलात् अज्ञानमात्मेति वदत इत्याह, प्राभाकरेत्यादि॥१२६॥सु०।

---

योगाचारमतमुत्थापयति, बौद्धस्त्विति। मनोमयादन्योऽन्तरोऽभ्यन्तर आत्मा विज्ञानमय: क्षणिकविज्ञानमय इति बौद्धाभिप्राय:। बुद्धि: क्षणिकविज्ञानमात्मेति अत्रानुभवमाह, अहं कर्त्तेति। मनस एव कर्त्तृत्वं स्यात् किं विज्ञानेन ? इत्याशङ्क्य मनस: करणपक्षपातित्वान्न कर्त्रनुभवगोचरत्वमित्यभिप्रेत्य युक्तिमाह, कर्त्तुरभाव इति। मनस: कर्त्तृत्वे सर्वेन्द्रियाणां स्वस्वविषयैर्युगपत्सम्बन्धे युगपज्ज्ञानोदयप्रसङ्ग:, कर्त्तुर्मनस: सर्वैरिन्द्रियैरधिष्ठातृत्वेन युगपत्सन्निहितत्वादपेक्षणीयान्तरानभ्युपगमाच्च। न चैवं दृश्यते तस्मान्मनसोऽन्य: कर्त्ता। मनस्तु विज्ञानक्रमहेतु: साधारणं करणमेवेत्यर्थ:। एवं वेदबाह्यवादानुपन्यस्य विज्ञानमयकोषपर्य्यन्तमात्मन: प्रत्यक्त्वमवगमितम्। न च क्षणिकविज्ञानस्यैवात्मत्वमध्यवसातुं शक्यं, ज्ञानेच्छाप्रयत्नसंस्कारस्मृतीनामेकाश्रयत्वनियमात् तेषाञ्च क्रमिकत्वात् क्षणिकविज्ञानाश्रयत्वानुपपत्ते:। ज्ञानादीनामेकाश्रयत्वाभावे तु वस्तुनि दृष्टे पूर्व्वदृष्टसजातीयत्वादिलिङ्गवशादिष्टसाधनताद्यनुमानपूर्व्वकं प्रवृत्त्याद्यभाव: प्रसज्येत ; अन्यदृष्टे अन्यस्मरणानुपपत्ते:। उक्तञ्च न्यायकुसुमाञ्जलौ,—"नान्यदृष्टं स्मरत्यन्यो नैकं भूतमपक्रमात्। वासनासङ्क्रमो नास्ति न च गत्यन्तरं स्थिरे ॥" इति ॥ १२५ ॥ वि०।

क्षणिकपक्षे बन्धमोक्षयोरपि वैयधिकरण्यमित्यादिबहुदुष्टत्वादनादरणीय: क्षणिकविज्ञानात्मपक्ष इत्यभिप्रेत्य वेदवादिपक्षमाश्रित्य विज्ञानादप्यन्तरमात्मानं निर्द्धार-

आनन्दमयः" [तैत्ति० २वल्ली० ५अनु०] इत्यादि-श्रुतेः सुषुप्तौ बुद्ध्यादीनामज्ञाने लयदर्शनात् "अहमज्ञः" अहं ज्ञानी" इत्याद्यनुभवाच्च अज्ञानमात्मेति वदतः ॥ १२६ ॥

भाट्टस्तु "प्रज्ञानघन एवानन्दमयः"[माण्डू०

---

अज्ञानावच्छिन्नं चैतन्यमात्मेत्याह, प्रज्ञानघन इत्यादि ॥ १२७ ॥ सु०।

---

यिपुस्तावत्तवापि स्थूलदर्शिमतभेदमाह, "प्राभाकर" इत्यादिना। प्राभाकरतार्किकावज्ञानमात्मेति वदत इत्यन्वयः। अज्ञानं क्षणिकविज्ञानादन्यत् तदधिकरणं द्रव्यरूपमात्मतत्त्वमिति वदत इत्यर्थः। विज्ञानमयादप्यन्तरे आत्मनि श्रुतिं प्रमाणयति, अन्योऽन्तर आत्मेति। विज्ञानमयादानन्दमयोऽन्य इति यावत्; न चानन्दमयः परमात्मेति त्वम्पदार्थमध्ये न तस्योदाहरणं युक्तमिति वाच्यम्, अन्नमयादिविकारप्रायपठितमयट्श्रुतिविरोधात् प्रियशिरस्त्वादिवचनविरोधाच्च। एतच्च भाष्यकारैः "आनन्दमयोऽभ्यासात्" [ब्रह्म० सू० १ अध्या० १ पा० १२ मन्त्रः] इत्यस्मिन्नधिकरणे निर्णीतम्। तस्माद् युक्तमेव त्वम्पदार्थमध्ये आनन्दमयश्रुत्युदाहरणमिति द्रष्टव्यम्। सुषुप्तौ बुद्ध्यादीनां ज्ञानसुखदुःखेच्छादीनामज्ञाने ज्ञानभिन्ने आत्मनि लयदर्शनादभावदर्शनान्न ज्ञानमात्मेति युक्तिमाह, बुद्ध्यादीनामिति। सर्व्वज्ञानाभावस्य सुषुप्तौ सम्प्रतिपन्नत्वात् सुषुप्तिजागरितयोरप्यात्मैक्यप्रत्यभिज्ञानान्न ज्ञानमात्मा, किन्तु तदन्य एवेति भावः। अनुभवमाह, अहमज्ञ इति। अहमज्ञो ज्ञानहीनोऽहं ज्ञानी ज्ञानवानित्यनुभवोऽपि ज्ञानात्मनोर्धर्म्मधर्म्मिभावेन भेदं द्रढयतीत्यर्थः ॥ १२६ ॥ विद्व०।

मतान्तरमाह भाट्ट इति। भाट्टस्त्वज्ञानोपहितं चैतन्यमात्मेति वदतीत्यन्वयः। अज्ञानोपहितत्वमज्ञानसंवलितत्वं ज्ञानाज्ञानरूपत्वं तदपि द्रव्यबोधरूपत्वमिति यावत्; तत्र माण्डूक्यश्रुतिं प्रमाणयति, प्रज्ञानघन इति। प्रज्ञानघनः प्रज्ञानैकरसः। एवकारेण रसान्तरसम्बन्धं वारयति। आनन्दमय इत्यानन्दप्रचुरो न आनन्दविकारः। प्राचुर्य्यार्थमयडन्तनिर्देशादीषदानन्दस्वभावतापि द्रव्यांशकृता-

५ मन्त्र: ] इत्यादिश्रुते: सुषुप्तौ प्रकाशाप्रकाश-सद्भावात्,"मामहं न जानामि" इत्याद्यनुभवाच्च, अज्ञानोपहितं चैतन्यमात्मेति वदति ॥ १२७ ॥

अपरो बौद्ध: "असदेवेदमग्र आसीत्" [ छान्दो० ६अध्या० २खण्ड० १मन्त्र: ] इत्यादि-श्रुते: सुषुप्तौ सर्वाभावादहं सुषुप्तौ नासमिति उत्थितस्य स्वाभावपरामर्शविषयानुभवाच्च, शून्य-मात्मेति वदति ॥ १२८ ॥

---

बौद्धैकदेशी कश्चित् श्रुत्यादिभि: शून्यमात्मेति वदति, अपरो बौद्ध इति ॥ १२८ ॥ सु० ।

---

त्मनि गम्यत इति भाव: । युक्तिमाह, सुषुप्ताविति । सुषुप्तौ प्रकाशाभावे सुषुप्ति-रसाक्षिकेति सुखमहमस्वाप्समित्युत्थितस्य परामर्शो न स्यात्, न तदेन्द्रियमनसां व्यापारोऽस्ति येन तज्जन्यज्ञानेनापि तत्परामर्श: स्यात् । नाप्यविद्या प्रकाशिका जडत्वात् । परिशेषादात्मैव बोधांश: प्रकाशक इति प्रकाशसद्भावसिद्धि: । न किञ्चिदवेदिषमिति परामर्शादात्मन्येव सुषुप्तावशेषविज्ञानाभाववत्त्वमपि कल्पते अतस्तत्राप्रकाशो द्रव्यांशश्चास्तीति भाव: । ननु सुषुप्तावेवात्मनो ज्ञानाज्ञानरूपत्वं नावस्थान्तर इत्याशङ्कामनुभवाभिनयेन प्रत्याचष्टे, मामहमिति । अहमित्यात्मनि कर्त्तरि भासमानेऽपि मां न जानामीत्यनुपसंहृतविशेषस्य तस्यैव कर्म्मत्वमपि तस्मिन्नेव ज्ञाने भासत इत्यवस्थान्तरेऽपि द्व्यात्मक आत्मेत्यभिप्राय: । ज्ञानस्यात्मधर्म्मत्वेऽपि न ततोऽत्यन्तभेदस्तादात्म्याङ्गीकारात् । समवायस्य च समवायिभ्यां सह सम्बद्ध-त्वासम्बद्धत्वविकल्पासहत्वेनाप्रामाणिकत्वादिति भाव: ॥ १२७ ॥ वि० ।

माध्यमिकमतमुत्थापयति, अपरो बौद्ध इति । इदं नामरूपात्मकं जगदग्रे सृष्टे: प्राक्कालेऽसच्छून्यमेवासीदिति बौद्धाभिप्रायेण श्रुतेरर्थ: । युक्तिमाह, सुषुप्ता-विति । तामेव स्वानुभवोपन्यासेन द्रढयति, अहमिति । अत: शून्यमात्मा सर्वाभावरूपो न द्रव्यबोधात्मक इति भाव: ॥ १२८ ॥ वि० ।

एतेषां पुत्त्रादीनां शून्यपर्य्यन्तानामनात्मत्वमुच्यते। एतैरतिप्राकृतादिवादिभिरुक्तेषु श्रुतियुक्त्यनुभवाभासेषु पूर्वपूर्वोक्तश्रुतियुक्त्यनुभवाभासानामुत्तरोत्तरश्रुतियुक्त्यनुभवाभासैरात्मत्वबाधदर्शनात्, पुत्त्रादीनामनात्मत्वं स्पष्टमेवेति॥१२६॥

किञ्च, प्रत्यगस्थूलो अचक्षुः अप्राणो अमना

---

अधुना पुत्त्रादिशून्यपर्य्यन्तानामात्मत्वप्रतिपादकश्रुत्यादेराभासमात्रत्वात् पूर्वपूर्वमतस्य उत्तरोत्तरमतबाध्यत्वाच्च दृश्यत्वजड़त्वादिहेतुकदृश्वकैश्च अनात्मत्वं प्रसिद्धमेव इति प्रतिपादयितुं प्रतिजानीते, एतेषामित्यादि।

पुत्त्राद्यात्मत्ववादिनामतिमन्दाधिकारित्वात् तत्प्रतिपादितश्रुत्यादेरपि पूर्वपूर्वमतस्य उत्तरोत्तरबाध्यत्वाच्च पुत्त्रादिशून्यान्तानाम् अनात्मत्वं प्रसिद्धमेव, इति प्रतिज्ञातमेवार्थं प्रकटयति, एतैरित्यादि॥ १२६॥ सु०।

ननु पुत्त्रादिशून्यपर्य्यन्तानामनात्मत्वे सिद्धे कस्तर्हि अहंप्रत्ययविषय आत्मेत्याशङ्क्यास्थूलादिनिषेधवाक्यजातबोधितं "सत्यं ज्ञानमनन्तं ब्रह्म" [ तैत्ति० उप० २ वल्ली० १ अनु० ] इत्यादिविधिवाक्यकोटिबोधितं यत् सत्यज्ञानमनन्तानन्दाद्वयं ब्रह्म तदेवाहमालम्बनमिति प्रबलश्रुतियुक्त्यनुभवैः प्रतिपाद-

---

एवं प्रत्यगात्मत्वाधिष्ठानं मतभेदेनोपन्यस्तं दूषयितुमारभते, एतेषामिति। तत्र तावत्पूर्व्वपूर्व्ववादिमतमुत्तरोत्तरवादिमतेन दूषितमिति। पुत्रादिशून्यपर्य्यन्तस्यानात्मत्वं तैरेव वादिभिः स्फुटीकृतमित्याह, एतैरिति। ननु कथं वावदूकविवाददर्शनमात्रेण पुत्त्रादीनां शून्यपर्य्यन्तानामनात्मत्वमवधारयितुं शक्यते श्रुतियुक्त्यनुभवानां प्रत्येकमुपन्यस्तत्वादित्याशङ्क्य सत्यमुपन्यस्तास्तैः श्रुत्यादयः, किन्तु ते सर्व्वे एवाभासाः पुत्रादिशून्यपर्य्यन्ताः; अतिरिक्तप्रत्यगात्मस्वरूपसमर्पकप्रबलश्रुतियुक्त्यनुभवविरोधादित्याह,

अकर्त्ता चैतन्यं चिन्मात्रं सदित्यादिप्रबलश्रुति-

यितुमाह, किञ्चेत्यादि। अस्थूलादिप्रबलश्रुतिवाक्यैः पुत्त्रादि-

किञ्चेति। न केवलं परस्परविगीतत्वादेव पुत्त्रादीनामनात्मत्वं, किन्तु प्रबलश्रुत्यादिभिः पूर्वेषां श्रुत्यादीनां बाधितत्वादपीति योजना। तत्र "आत्मा वै पुत्त्रनामाऽसि" [ कौषी० उप० २ अध्या० ११ मन्त्रः ] इतिश्रुतेः प्रत्यक्श्रुत्या बाधः। प्रत्यक्त्वं नाम सर्व्वान्तरत्वम्। "स वा एष पुरुषोऽन्नरसमयः" [ तैत्ति० उप० २ वल्ली० १ अनु० ] इतिश्रुतेरस्थूलश्रुत्या बाधः। "ते ह प्राणाः प्रजापतिम्" [ छान्दो० ५ अध्या० १ खण्ड० ७ मन्त्रः ] इत्यादिश्रुतिसामर्थ्यसिद्धेन्द्रियात्मत्वस्य अचक्षुरित्यादिना बाधः। "अन्योऽन्तर आत्मा प्राणमयः" [ तैत्ति० उप० २ वल्ली० २ अनु० ] "अन्योऽन्तर आत्मा मनोमयः" [ तैत्ति० उप० २ वल्ली० ३ अनु० ] इत्यनयोरप्राणोऽमना इत्याभ्यां बाधः। "अन्योऽन्तर आत्मा विज्ञानमयः" [ तैत्ति० उप० २ वल्ली० ४ अनु० ] इत्यस्याः श्रुतेरकर्त्तेत्यनेन बाधः। "अन्योऽन्तर आत्मानन्दमयः" [ तैत्ति० उप० २ वल्ली० ५ अनु० ] इत्यस्याश्चैतन्यमित्यनेन बाधः। "प्रज्ञानघन एवानन्दमयः" [ माण्डू० उप० ५ मन्त्रः ] इत्यस्याः चिन्मात्रमित्यनेन बाधः। "असदेवेदम्" [ छान्दो० उप० ६ अध्या० २ खण्ड० १ मन्त्रः ] इत्यस्याः सदित्यनेन बाध इति प्रत्येकं योजनीयम्। अत्रोदाहृतश्रुतीनामित्थमक्षरविन्यासाः क्रमेण द्रष्टव्याः। "कश्चिद्धीरः प्रत्यगात्मानमैक्षत्" [ कठ० उप० २ अध्या० ४ वल्ली० १ मन्त्रः ]। "अस्थूलमनण्वह्रस्वमदीर्घम्" [ वृह० उप० ३ अध्या० ८ ब्रा० ८ मन्त्रः ]। "अचक्षुःश्रोत्रं तदपाणिपादम्" [ मुण्ड० १ मुण्ड० १ खण्ड० ६ मन्त्रः ]। "अप्राणो ह्यमनाः शुभ्रः" [ मुण्ड० २ मुण्ड० १ खण्ड० २ मन्त्रः ]। "अनन्तश्चात्मा विश्वरूपो ह्यकर्त्ता" [ श्वेता० १ अध्या० ९ मन्त्रः ]। "न चास्ति वेत्ता मम चित् सदाऽहम्" [ कैव० उप० २ खण्ड० २ मन्त्रः ]। "चिन्मात्रोऽहं सदा शिवः" [ कैव० उप० १ खण्ड० १८ मन्त्रः ]। "सदेव सोम्येदमग्र आसीत्" [ छान्दो० ६ अध्या० २ खण्ड० १ मन्त्रः ]। "सत्यं स आत्मा" [ छान्दो० ६ अध्या० ८ खण्ड० ७ मन्त्रः ] इति। आदिशब्दात् "एष त आत्मा सर्व्वान्तरः" [ वृह० उप० ३ अध्या० ४ ब्रा० १ मन्त्रः ] "अशरीरं शरीरेषु" [ कठ० उप० १ अध्या० २ वल्ली० २१ मन्त्र ] "प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः" [ वृह० उप० ४ अध्या० ४ ब्रा० १८ मन्त्रः ] "केन प्राणः प्रथमः प्रैति युक्तः" [ केन० उप०

विरोधात् अस्य पुत्त्रादिशून्यपर्य्यन्तस्य जड़स्य चैतन्यभास्यत्वेन घटादिवदनित्यत्वात् "अहं ब्रह्म" [ वृह० १ अध्या० ४ ब्रा० १० मन्त्रः ] इति विद्वदनुभवप्राबल्याच्च तत्तच्छ्रुतियुक्त्यनु-

शून्यपर्य्यन्तात्मातिरिक्तात्मस्वरूपप्रतिपादनात् पुत्त्रादीनां जड़त्वादिहेतुभिरनात्मत्वमित्यर्थः। अस्मिन्नर्थे प्रबलविद्वदनुभवं प्रमाणयति, अहं ब्रह्मेति। पुत्त्रादिश्रुत्यादीनां दौर्बल्यं दर्शयति, तत्तदित्यादि ॥ १३० ॥ सु०।

१ खण्ड० १ मन्त्रः ] "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" [ तैत्ति० उप० २ वल्ली० ४ अनु० १ मन्त्रः ] "न करोति न लिप्यते" [ गीता १३ अध्या० ३१ श्लोकः ] "साक्षी चेता केवलो निर्गुणश्च" [ श्वेता० उप० ६ अध्या० ११ मन्त्रः ] "कृत्स्नः प्रज्ञानघन एव" [ वृह० उप० ४ अध्या० ५ ब्रा० १३ मन्त्रः ] "सन्तमेनं ततो विदुः" [ तैत्ति० उप० २ वल्ली० ६ अनु० ] इत्याद्याः श्रुतयः सङ्गृह्यन्ते।

इदमत्रानुसन्धेयम् ;—पुत्रात्मश्रुतिस्तु देहावलम्बिनीति तस्या गौणार्थत्वं स्पष्टमेव। "ते ह प्राणाः" [ छान्दो० उप० ५ अध्या० १ खण्ड० ७ मन्त्रः ] इति श्रुतिरर्थवादत्वान्न स्वार्थपरा। अन्नमयाद्यानन्दमयान्तश्रुतेर्मुञ्जादिषीकावत्सर्वान्तरब्रह्मपुच्छशब्दवाच्यात्मप्रतिपत्त्युपायार्थत्वेनोपन्यस्तत्वान्न तस्याः स्वार्थपरत्वम्। प्रत्यगादीनां सिद्धान्त्युपन्यस्तश्रुतिवचनानान्तु वक्ष्यमाणोपक्रमादिलिङ्गैरात्मयाथात्म्यपरत्वमिति युक्तं प्राबल्यमिति।

पुत्रादिशून्यपर्य्यन्तं न नित्यं जड़त्वाद्घटादिवत्। नित्यश्चात्मा तदनित्यत्वेऽकृताभ्यागमकृतविनाशप्रसङ्गात्। अतो न पुत्रादीनामात्मत्वमिति युक्तिमाह, अस्य इति। जड़त्वमुपपादयति, चैतन्यभास्यत्वेन इति। न चात्मनोऽपि चैतन्यभास्यत्वं कर्म्मकर्तृभावविरोधात्; कर्तृत्वं हि क्रियां प्रति गुणभावः, कर्म्मत्वं तु प्राधान्यम्। तथा चैकस्यां क्रियायामेकस्यात्मनो युगपद्विरुद्धधर्म्माश्रयत्वे वैरूप्यप्रसङ्गः। नापि ज्ञानाश्रयत्वेनात्मनो भानं सम्भवति, ज्ञानभिन्नस्य ज्ञानकर्म्मत्वेनैवापरोक्षत्वनियमात्। नापि नित्यानुमेयोऽसन्दिग्धत्वात्। न हि कदा-

भवाभासानां बाधितत्वादपि पुत्त्रादिशून्यपर्य्यन्त-मखिलमनात्मैव ॥ १३० ॥

चिदात्मन्यहमस्मि नास्मि वेति सन्देहः कस्यचिद्दृश्यते ; परिशेषात् स्वयम्प्रकाश इति न तस्य चैतन्यभास्यता। श्रुतयश्च भवन्ति स्वप्रकाशत्वसाधिकाः परप्रकाश्यतानुमानविरोधिन्यः। "न विज्ञातेर्विज्ञातारं विजानीयाः" [ बृह० उप० ३ अध्या० ४ ब्रा० २ मन्त्रः ] "विज्ञातारमरे केन विजानीयात्" [ बृह० उप० २ अध्या० ४ ब्रा० १४ मन्त्रः ] "अन्यदेव तद्विदितादथो अविदितादधि" [ केन० उप० १ खण्ड० ३ मन्त्रः ] "अत्रायं पुरुषः स्वयंज्योतिः" [ बृह० उप० ४ अध्या० ३ ब्रा० ९ मन्त्रः ] "आत्मैवास्य ज्योतिः" [ बृह० उप० ४ अध्या० ३ ब्रा० ६ मन्त्रः ] "अप्राप्य मनसा सह" [ तैत्ति० उप० २ वल्ली ४ अनु० ] "यन्मनसा न मनुते" [ केन० उप० १ खण्ड० ५ मन्त्रः ] इत्येवमाद्याः।

ननु न चायमात्माणुपरिमाणवांस्तथा सति सकलशरीरव्यापिचैतन्यानुपलम्भप्रसङ्गात्। नापि मध्यमपरिमाणो मध्यमपरिमाणवतः सावयवत्वेनानित्यत्वप्रसङ्गात् "एवं चात्माऽकार्त्स्न्यं" [ ब्रह्म० सू० २ अध्या० २ पा० ३४ सूत्रम् ] इति न्यायनिरस्तत्वाच्च। नापि परममहत्परिमाण उत्क्रान्तिगत्यागतिश्रुतिविरोधात्। अतः किम्परिमाणोऽयं प्रत्यगात्मेति ? उच्यते ;—स्वतस्तावदखण्डब्रह्मात्मस्वभावत्वात् "स वा एष महाजन आत्मा" [ बृह० उप० ४ अध्या० ४ ब्रा० २२ मन्त्रः ] इत्यादिश्रुतेश्च परममहत्परिमाण एव। ब्रह्मात्मस्वभावत्वं चास्य प्रवेशश्रुतिभ्यः। "तत् सृष्ट्वा तदेवानुप्राविशत्" [ तैत्ति० उप० २ वल्ली ६ अनु० ]। "स एतमेव सीमानं विदार्य्यैतया द्वारा प्रापद्यत" [ ऐत० उप० ३ खण्ड० १२ मन्त्रः ] "स एष इह प्रविष्ट आनखाग्रेभ्यः" [ बृह० उप० १ अध्या० ४ ब्रा० ७ मन्त्रः ] "अनेन जीवेनात्मनानुप्रविश्य" [ छान्दो० ६ अध्या० ३ खण्ड० २ मन्त्रः ] "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन् यदास्ते" [ तैत्ति० आर० ३ । १२ । ७ ] "एको देवो बहुधा सन्निविष्टः" [ तैत्ति० आर० ३ । १४ । १ ] "यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा ॥" [ ब्रह्मसूत्रभाष्य० ३ अध्या० २ पा० १८ सू० शाङ्करभाष्य ] "पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः। पुरः स पक्षीभूत्वा पुरः पुरुष

आविशत्" [ बृह० उप० २ अध्या० ५ ब्रा० १८ मूत्रम् ] "रूपं रूपं प्रतिरूपो बभूव" [ बृह० उप० २ अध्या० ५ ब्रा० १९ मूत्रम् ] "अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव" [ कठ० २ अध्या० ५ वल्ली० ९ मन्त्रः ] इत्येवमादिभ्यः। "क्षेत्रज्ञं चापि मां विद्धि............" [ गीता० १३ अध्या० २ श्लोकः ] "अहमात्मा गुडाकेश! सर्वभूताशयस्थितः" [ गीता० १० अध्या० २० श्लोकः ] "ममैवांशो जीवलोके जीवभूतः सनातनः" [ गीता० १५ अध्या० ७ श्लोकः ] इत्यादिस्मृतिभ्यश्च। संसारित्वावस्थायामेव तस्योपाधिनिबन्धनं परिच्छिन्नपरिमाणम्। तच्च यथोपाध्यनुरूपत्वादनियतम्। तथा च दर्शयति श्रुतिः,—"अङ्गुष्ठमात्रो रवितुल्यरूपः" [श्वेता० उप० ५ अध्या० ८ मन्त्रः ] "आराग्रमात्रोऽप्यपरोऽपि दृष्टः" [ श्वेता० उप० ५ अध्या० ८ मन्त्रः ] "बालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः..............॥" [ श्वेता० उप० ५ अध्या० ९ मन्त्रः ] "नैव स्त्री न पुमानेष न चैवायं नपुंसकः। यद्यच्छरीरमादत्ते तेन तेन स युज्यते॥" [ श्वेता० उप० ५ अध्या० १० मन्त्रः ] इत्यादिवचनैः। "स च प्रतिशरीरमभिन्न एव" "एको देवो बहुधा सन्निविष्टः" [ तैत्ति० आर० ३।१४।१ ] "एकं सद्विप्रा बहुधा वदन्ति" [ ऋग्वेद ] "एकं सन्तं बहुधा कल्पयन्ति" [ ऋग्वेद ] "त्वमेकोऽसि बहूननुप्रविष्टः" [ तैत्ति० आर० ३।१४।३ ] "इन्द्रस्यात्मानं शतधा चरन्तम्" [ तैत्ति० आर० ३। ११। ५ ] "एकः सन् बहुधा विचारः" [ तैत्ति० आर० ३। ११। १ ] इत्यादिश्रुतिशतेभ्यः। तस्माद्देहेन्द्रियप्राणमनोबुद्ध्यव्याकृतविलक्षणस्तत्साक्षी चिद्धातुः सद्रूपः प्रत्यगात्मेति निश्चितोऽर्थः।

अनुभवप्राबल्यं दर्शयति, अहमिति। "तं न पश्यन्ति। अकृत्स्नो हि सः प्राणन्नेव प्राणो नाम भवति" [ बृह० उप० १ अध्या० ४ ब्रा० ७ मन्त्रः ] इत्युपक्रम्य प्राणाद्यात्मविज्ञानमकृत्स्नविषयतादोषेण निन्दित्वान्ते तु "आत्मेत्येवोपासीतात्र ह्येते सर्वं एकं भवन्ति" [ बृह० उप० १ अध्या० ४ ब्रा० ७ मन्त्रः ] इति कृत्स्नात्मस्वभावं वेदितव्यं निर्दिश्य "तदेतत्पदनीयमस्य सर्वस्य यदयमात्मा" [ बृह० उप० १ अध्या० ४ ब्रा० ७ मन्त्रः ] इति तदतिरिक्तस्य ज्ञातव्यस्यानवशेषं दर्शयन्ती श्रुतिस्तद्विज्ञानवत एव विद्वत्तां सूचयति। तथोत्तरत्रापि "तदाहुर्यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तद्ब्रह्माऽवेत्" [ बृह० उप० १ अध्या० ४ ब्रा० ९ मन्त्रः ] इत्याक्षिप्य "तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्" [ बृह० उप० १ अध्या० ४ ब्रा० १० मन्त्रः ] इति च विद्वदनुभवत्वं ब्रह्मात्मज्ञानस्य दर्शयति। अत इतोऽर्वाक्षु देहेषु प्रत्यगात्मत्वाभिमानो भ्रान्तिरिति भावः॥ १२९।१३०॥ विद्व०।

अतस्तत्तद्भासकं नित्यशुद्धबुद्धमुक्तसत्यस्वभावं प्रत्यक्चैतन्यमेवात्मवस्त्विति वेदान्तविद्वदनुभवः ॥ १३१ ॥

यतः पुत्रादीनां जड़त्वादिहेतुभिरनात्मत्वम्, अतः पुत्रादिभासकं नित्यशुद्धत्वादिस्वरूपमेव आत्मवस्तु इत्यर्थः।

ननु इदं विरुद्धं यत् पुत्रादीनामात्मत्वप्रतिपादकश्रुतीनाम् अप्रामाण्यम् अस्थूलादिश्रुतीनां प्रामाण्यमिति। न हि वेदान्तवाक्येषु केषाञ्चिदप्रामाण्यं केषाञ्चित् प्रामाण्यम् इति वा शक्यं प्रतिपादयितुम्। एवञ्चेत् पुत्रादिश्रुतीनां प्रामाण्यम् अस्थूलादिवाक्यानामप्रामाण्यमिति वैपरीत्यं किं न स्यात् वेदवाक्यत्वाविशेषात्। किं केषाञ्चिद्वेदान्तवाक्यानामप्रामाण्यप्रतिपादनार्थमिदं प्रकरणमारब्धम्, अतः कथं निर्णय इति चेत् अत्रोच्यते,—पुत्रादिश्रुतीनां सर्वथैव प्रामाण्यं नास्तीति न निषिध्यते, किन्तु अस्थूलादिप्रबलश्रुतिस्मृतिन्यायविरोधात् स्वार्थे तात्पर्य्याभावात् तेषां स्थूलारुन्धतीन्यायेन पूर्वपूर्वनिराकरणद्वारा सूक्ष्मसूक्ष्मवस्तूपदेशे तात्पर्य्यमित्येतावदेव प्रतिपाद्यते। तथा हि "ध्रुवमरुन्धतीञ्च दर्शयति" इति विधिबलात् वरबध्वोररुन्धतीदर्शने प्राप्ते परमसूक्ष्माया अरुन्धत्याः प्रथमकक्षायामेव प्रतिपत्तुमशक्यत्वात् प्रथमं चन्द्रज्योतीरूपारुन्धतीत्युच्यते, ततश्चन्द्रभिन्ना तारकाऽरुन्धतीत्युच्यते, ततश्चेतरतारकाभिन्ना सप्ततारकात्मिका अरुन्धतीत्युच्यते, तदनन्तरमितरतारकाचतुष्टयभिन्ना तारकात्रितयात्मिकेत्युच्यते, ततस्तन्मध्यतारकेत्युच्यते, ततस्तत्समीपवर्त्तिनी परमसूक्ष्मा अरुन्धतीत्यु-

प्रत्यगात्मविषयाध्यारोपमुपसंहरति, अत इति। वेदान्तविद्वदनुभव इति विशेषणेन मतान्तरेऽनुभवस्य मूलप्रमाणशैथिल्यं सूचयति ॥ १३१ ॥ विद्व०।

एवमध्यारोपः ॥ १३२ ॥

अपवादो नाम—रज्जुविवर्त्तस्य सर्पस्य

च्यते। न चैतावता एतेषां पञ्चानां वाक्यानां परस्परविरुद्धार्थ-प्रतिपादकत्वेन अप्रामाण्यं शक्यं प्रतिपादयितुं, किन्तु प्रतिपत्तृ-वुद्ध्यनुसारेण सोपानक्रमवत् पूर्वपूर्वनिराकरणद्वारा सूक्ष्मा-रुन्धतीप्रतिपादने तात्पर्य्यात्। तद्वदत्रापि अन्नमयः प्राणमयो मनोमयो विज्ञानमयः आनन्दमयः आत्मा "ब्रह्म पुच्छं प्रतिष्ठा" [ तैत्ति० २ वल्ली० ५ अनु० ] इति पुच्छब्रह्मपर्य्यवसितानां पञ्चकोषवाक्यानामपि परस्परविरुद्धार्थप्रतिपादकत्वेऽपि प्रति-पत्तृवुद्ध्यनुसारेण सोपानक्रमवत् पूर्वपूर्वनिराकरणद्वारा परम-सूक्ष्मपुच्छब्रह्मप्रतिपादने तात्पर्य्यात्। तस्मात् सर्वेषां वेद-वाक्यानां साक्षात् परम्परया वा अद्वितीयवस्तुप्रतिपादने तात्-पर्य्यात् प्रामाण्याविरोधः इति सङ्क्षेपः ॥ १३१ ॥ सु० ।

विशेषाध्यारोपप्रकरणमुपसंहरति, एवमित्यादि॥१३२॥सु०।

आत्मवस्तुनि मिथ्याप्रपञ्चस्य सामान्यतो विशेषतश्चाध्या-रोपप्रकारं सप्रपञ्चमभिधाय इदानीं तदपवादप्रकारं वक्तु-मारभते, अपवादो नामेति। असङ्गोदासीने परमात्मवस्तुनि तद्विवर्त्तभूताज्ञानादिमिथ्याप्रपञ्चस्य चिद्वस्तुमात्रावशेषतया अव-स्थानमेव अपवादः इति वक्तुं प्रथमं लौकिकं दृष्टान्तमाह, रज्जुविवर्त्तस्येति। रज्जुस्वरूपापरित्यागेन सर्पाकारेण भास-मानस्य रज्जुविवर्त्तस्य अपवादो नाशो नाम अधिष्ठानरज्जु-

अध्यारोपप्रकरणमुपसंहरति, एवमिति ॥ १३२ ॥ विद्व० ।

एवमध्यारोपं सप्रपञ्चं निरूप्यापवादमिदानीं निरूपयिष्यंस्तल्लक्षणमाह, अपवादो नाम इति। कार्य्यस्य कारणमात्रसत्तावशेषणं कारणस्वरूपव्यतिरेकेण कार्य्य-स्यासत्तावधारणं वापवाद इत्युक्तं भवति ॥ १३३ ॥ विद्व० ।

रज्जुमात्रत्ववत्, वस्तुविवर्त्तस्य अवस्तुनोऽज्ञानादेः प्रपञ्चस्य वस्तुमात्रत्वम्; तदुक्तं,—सतत्त्वतोऽन्यथा-प्रथा विकार इत्युदीरितः। अतत्त्वतोऽन्यथाप्रथा विवर्त्त इत्युदाहृतः॥" इति॥ १३३॥

तथाहि, एतद्भोगायतनं चतुर्विधसकलस्थूल-

मात्रतया अवस्थानवत् चिद्विवर्त्तस्य अज्ञानादिप्रपञ्चस्य नाशो नाम चिन्मात्रत्वेन अवस्थानमित्यर्थः। अत्र यथास्वरूपेण अवस्थितस्य वस्तुनोऽन्यथाभावो द्विधा भवति;—परिणामभावः, विवर्त्तभावश्चेति। तत्र परिणामभावो नाम वस्तुनो यथार्थतः स्वस्वरूपं परित्यज्य स्वरूपान्तरापत्तिः; यथा,—दुग्धमेव स्व-स्वरूपं परित्यज्य दध्याकारेण परिणमते। विवर्त्तभावस्तु वस्तुनः स्वस्वरूपापरित्यागेन स्वरूपान्तरेण मिथ्याप्रतीतिः; यथा,—रज्जुः स्वस्वरूपापरित्यागेन सर्पाकारेण मिथ्या प्रतिभासते। अत्र वेदान्ते ब्रह्मणि प्रपञ्चभानस्य परिणामभावो नाङ्गीक्रियते, दुग्धादिवद् ब्रह्मणो विकारित्वप्रसङ्गादनित्यत्वादिदोषापत्तेः; विवर्त्तभावाङ्गीकारे तु नायं दोषः, ब्रह्मणि प्रपञ्चभानस्य मिथ्या-त्वेन विकारित्वाभावात्। तदुक्तम्,—"अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः" इति। तस्माच्चिद्विवर्त्तस्य प्रपञ्चस्य चिन्मात्रावस्थानमेव अपवादः इति भावः। अस्मिन्नर्थे ग्रन्था-न्तरसंवादं दर्शयति, तदुक्तमित्यादि॥ १३३॥ सु०।

सामान्यतो दर्शितामपवादप्रक्रियां विस्तरेण प्रतिपादयितुं प्रतिजानीते, तथाहीति। स्थूलसूक्ष्मकारणप्रपञ्चानामुत्पत्ति-

एवंलक्षणोऽपवादः केन क्रमेणेत्यपेक्षायां "विपर्य्ययेण तु क्रमोऽत उपपद्यते च" [ब्रह्म० सू० २ अध्या० ३ पा० १४ सूत्रम्] इतिन्यायमाश्रित्योत्पत्तिक्रम-वैपरीत्येनापवादं क्रमेण दर्शयति, तथा हीत्यादिना। एतद्भोगायतनं इति प्रत्यक्ष-

शरीरजातम्, एतद्भोग्यरूपान्नपानादिकम्, एतदाश्रयभूतभूरादिचतुर्दशभुवनानि, एतदाश्रयभूतं ब्रह्माण्डं चैतत् सर्वमेतेषां कारणरूपं पञ्चीकृतभूतमात्रं भवति ॥ १३४ ॥

एतानि शब्दादिविषयसहितानि पञ्चीकृतभूतजातानि सूक्ष्मशरीरजातञ्चैतत् सर्वम् एतेषां कारणरूपमपञ्चीकृतभूतमात्रं भवति ॥ १३५ ॥

एतानि सत्त्वादिगुणसहितानि अपञ्चीकृतपञ्चभूतानि उत्पत्तिव्युत्क्रमेण एतत्कारणभूताज्ञानोपहितचैतन्यमात्रं भवति ॥ १३६ ॥

---

वैपरीत्येन तत्तत्कारणरूपेण अवस्थानमेव अपवाद इत्याह, एतद्भोगायतनमिति। एतत् स्थूलशरीरं स्वाश्रयब्रह्माण्डसहितं स्वकारणभूतेषु पञ्चीकृतेषु पञ्चमहाभूतेषु लीनं सत् तन्मात्रतयाऽवतिष्ठते। तानि च पञ्चीकृतानि भूतानि शब्दादिसहकृतानि सप्तदशावयवात्मकलिङ्गशरीराणि स्वकारणेषु अपञ्चीकृतभूतेषु लीनानि भवन्ति। तानि अपञ्चीकृतानि सत्त्वादिगुणसहितानि स्वकारणाज्ञानोपहितचैतन्ये लीनानि भवन्ति।

---

सिद्धं चतुर्विधभूतग्रामं चरमकार्य्यमङ्गुल्या निर्दिशति। द्वितीय एतच्छब्दोऽन्नादिविषयः। आदिशब्दः पानादिसङ्ग्रहार्थः। भूरादिचतुर्द्दशभुवनानि तृतीयैतच्छब्दार्थः। एतत्सर्वमित्यत्रैतच्छब्द उक्तसमस्तसङ्ग्रहार्थः। एतेषामित्यस्यापि स एवार्थः। उत्पत्तिव्युत्क्रमेणेत्यस्यायमर्थः। पृथिवी गन्धतन्मात्रात्मिका रसतन्मात्रात्मिका मात्रं भवति। आपश्च ता रूपतन्मात्रात्मकतेजोमात्रं भवति। तच्च तेजः स्पर्शतन्मात्रात्मकवायुमात्रं भवति। स च वायुः शब्दतन्मात्रात्मकाकाशमात्रं भवति। स चाकाशः स्वकारणभूताज्ञानोपहितचैतन्यमात्रं भवतीति ॥ १३४—१३६ ॥ विद्व०।

एतदज्ञानमज्ञानोपहितं चैतन्यं चेश्वरादिकम्, एतदाधारभूतानुपहितचैतन्यरूपं तुरीयं ब्रह्ममात्रं भवति॥ १३७॥

आभ्यामध्यारोपापवादाभ्यां तत्त्वम्पदार्थशोधनमपि सिद्धं भवति। तथा हि, अज्ञानादिसमष्टिः, एतदुपहितं सर्वज्ञत्वादिविशिष्टं चैतन्यम्,

---

तच्चाज्ञानं तदुपहितचैतन्यं सर्वज्ञत्वादिगुणविशिष्टञ्च स्वाधारभूतानुपहितचैतन्ये लीनं भवति; चैतन्यमेव अवशिष्यते इत्यर्थः॥ १२४—१२७॥ सु०।

फलितमाह, आभ्यामित्यादि। तत्त्वम्पदार्थशोधनप्रकारं प्रतिजानीते, तथाहीत्यादि। अज्ञानं तदवच्छिन्नेश्वरचैतन्यं तदनुपहितचैतन्यञ्च एतत्त्रयं तप्तायःपिण्डवदन्योन्यतादात्म्याध्यासेन एकत्वेन प्रतीयमानं सत् तत्पदवाच्यार्थो भवतीत्यर्थः।

तत्पदलक्ष्यार्थमाह, एतदित्यादि। अज्ञानावच्छिन्नेश्वर-

---

एतदाधारेत्यत्रैतच्छब्दोऽज्ञानतदुपहितचैतन्यविषयः। एतदाधारेत्यादित्रयाणां पदानां कर्म्मधारयः। तथा च स्मृतिश्रुती भवतः,—"जगत्प्रतिष्ठा देवर्षे! पृथिव्यप्सु प्रलीयते। ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते॥ वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते। अव्यक्तं पुरुषे ब्रह्मन्निष्कले सम्प्रलीयते॥" [इति महाभारतम्] "पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः" इति च [कठ० उप० १ अध्या० ३ वल्ली० ११ मन्त्रः]॥ १३७॥ विद्व०।

अध्यारोपापवादनिरूपणे फलितमाह, आभ्यामिति। ब्रह्मात्मचैतन्यस्याद्वितीयप्रत्यग्रूपतानिरूपणार्थत्वादध्यारोपादिप्रपञ्चनस्य पदार्थशुद्धिरवान्तरफलमिति सूचयितुं पदार्थशोधनमपि इत्युक्तम्। तत्त्वम्पदयोः प्रत्येकं द्विविधोऽर्थः, वाच्यो लक्ष्यश्चेति। तदुभयं विभज्य दर्शयति, तथा हीत्यादिना। समष्ट्यज्ञानं तदुपहित ईश्वरस्तदुभयाश्रयमनुपहितं स्वमहिम्नि प्रतिष्ठितमक्षरशब्दवाच्यं चिन्मात्रमित्येतत्त्रयं

एतदनुपहितं चैतन्यं तप्तायःपिण्डवदेकत्वेन अवभासमानं तत्पदवाच्यार्थो भवति। एतदुपाध्युपहिताधारभूतमनुपहितं चैतन्यं तत्पदलक्ष्यार्थो भवति॥ १३८॥

अज्ञानादिव्यष्टिः, एतदुपहिताल्पज्ञत्वादिविशिष्टचैतन्यम्, एतदनुपहितं चैतन्यं तप्तायःपिण्डवदेकत्वेन अवभासमानं त्वम्पदवाच्यार्थो भवति; एतदुपाध्युपहिताधारभूतमनुपहितं प्रत्यगानन्दं तुरीयं चैतन्यं त्वम्पदलक्ष्यार्थो भवति॥ १३९॥

---

चैतन्यस्य आधारभूतं यदनुपहितचैतन्यं तत् ताभ्यां विविक्तं सत् भेदविवक्षया तत्पदलक्ष्यार्थो भवतीत्यर्थः॥ १३८॥ सु०।

त्वम्पदवाच्यार्थमाह, अज्ञानादीत्यादि। व्यष्टिभूतमज्ञानं यदन्तःकरणं तदवच्छिन्नं जीवचैतन्यं तदनुपहितं चैतन्यञ्चेति एतत्त्रयं तप्तायःपिण्डवत् परस्परतादात्म्याध्यासेन अभेदविवक्षया त्वम्पदवाच्यार्थो भवतीत्यर्थः।

त्वम्पदलक्ष्यार्थमाह, एतदित्यादि। अन्तःकरणोपहितचैतन्यत्रयस्य आधारभूतं यदनुपहितं प्रत्यगानन्दं तुरीयं चैतन्यं तत् त्वम्पदलक्ष्यार्थो भवतीत्यर्थः॥ १३९॥ सु०।

---

तप्तायःपिण्डवदविविक्तं तत्पदवाच्यार्थ इत्यर्थः। आदिपदात्समष्टिहिरण्यगर्भविराजौ गृह्येते। तत्राज्ञानादिव्यष्टिरित्यत्रादिपदात्सूक्ष्मशरीरं स्थूलशरीरञ्च गृह्यते। एतदनुपहितं प्रत्यक्चितिमात्रम्। शेषं पूर्ववत्। उभयत्रापि यथायोगमव्याकृतं समष्टिस्वप्नजागरौ सुषुप्तिः, व्यष्टिस्वप्नजागरौ चेत्येवमवस्थात्रययुक्तमिति

अथ महावाक्यार्थो वर्ण्यते ।—इदं "तत्त्वमसि" [ छान्दो० उप० ६ अध्या० ८ खण्ड० ७ मन्त्रः ] वाक्यं सम्बन्धत्रयेण अखण्डार्थबोधकं भवति ॥ १४० ॥

सम्बन्धत्रयं नाम—पदयोः सामानाधिकरण्यं, पदार्थयोर्विशेषणविशेष्यभावः, प्रत्यगात्मपदार्थयोः लक्ष्यलक्षणभावश्चेति । तदुक्तं,—"सामानाधि-

पदार्थमभिधाय वाक्यार्थं वक्तुमुपक्रमते, अथेत्यादि ।

ननु जीवेश्वरयोः किञ्चिज्ज्ञत्वसर्वज्ञत्वादिविशिष्टयोरत्यन्तविलक्षणयोः तत्त्वमस्यादिमहावाक्यानि परस्परविरुद्धार्थप्रतिपादकानि कथमखण्डैकरसं ब्रह्म प्रतिपादयन्तीत्याशङ्क्य साक्षादैक्यप्रतिपादकत्वाभावेऽपि लक्षणया सम्बन्धत्रयेण अखण्डैकार्थं प्रतिपादयन्तीत्याह, इदमित्यादि ॥ १४० ॥ सु० ।

सम्बन्धत्रयस्वरूपमाह, सम्बन्धत्रयमित्यादि । पदार्थप्रत्यगात्मनां सम्बन्धत्रयसद्भावे वृद्धसम्मतिमाह, तदुक्तमित्यादि ॥ १४१ ॥ सु० ।

योजयितव्यम् । अज्ञानतत्कार्य्यसमस्तप्रपञ्चेषु सत्तास्फूर्त्तिप्रदत्वेनानुस्यूतं चित्सदानन्दाद्वयात्मकं वस्तु तत्पदलक्ष्यार्थः । देहेन्द्रियमनोबुद्धिप्राणाहङ्कृतितद्धर्मजाग्रत्स्वप्नसुषुप्त्यवस्थाभ्यो विलक्षणस्तत्साक्षी चिद्धातुस्त्वम्पदलक्ष्यार्थ इत्याह, एतदुपाध्युपहितेति ॥ १३८।१३९ ॥ विद्व० ।

पदार्थप्रतिपत्तिपूर्व्वकत्वाद्वाक्यार्थप्रतिपत्तेरादावध्यारोपापवादाभ्यामवान्तरवाक्यावष्टम्भेन पदार्थौ परिशोध्येदानीं महावाक्यार्थं निरूपयितुमुपक्रमते अथ इति । वाक्यात् वाक्यार्थप्रतिपत्तिक्रममादौ सङ्गृह्णाति, इदमिति ॥ १४० ॥ विद्व० ।

उक्तमेव विभजते, सम्बन्धत्रयं नाम इति । उक्ते विभागे नैष्कर्म्यसिद्धिवचनं संवादयति तदुक्तमिति ॥ १४१ ॥ विद्व० ।

करण्यञ्च विशेषणविशेष्यता। लक्ष्यलक्षणसम्बन्धः पदार्थप्रत्यगात्मनाम्॥" इति॥ १४१॥

सामानाधिकरण्यसम्बन्धस्तावत् यथा— "सोऽयं देवदत्तः" इत्यस्मिन् वाक्ये तत्कालविशिष्टदेवदत्तवाचकसशब्दस्य एतत्कालविशिष्टदेवदत्तवाचकायंशब्दस्य च एकस्मिन् देवदत्तपिण्डे तात्पर्य्यसम्बन्धः। तथा च तत्त्वमसीति वाक्येऽपि परोक्षत्वादिविशिष्टचैतन्यवाचकतत्पदस्य अप-

पदयोः सामानाधिकरण्यम् उदाहरणनिष्ठं कृत्वा प्रदर्शयति, सामानाधिकरण्येति। भिन्नप्रवृत्तिनिमित्तयोः शब्दयोः एकस्मिन् अर्थे प्रवृत्तिः सामानाधिकरण्यम्; तच्च "सोऽयं देवदत्तः"इति वाक्ये स इति तत्पदस्य तत्कालतद्देशवैशिष्ट्यं प्रवृत्तिनिमित्तम्; एतत्कालैतद्देशवैशिष्ट्यम् अयंशब्दस्य प्रवृत्तिनिमित्तम्; तथा च भिन्नप्रवृत्तिनिमित्तयोः सोऽयंशब्दयोः एकस्मिन् देवदत्तपिण्डे तात्पर्य्यसम्बन्धः सामानाधिकरण्यमित्यर्थः।

उक्तमर्थं दार्ष्टान्तिके योजयति, तथा चेत्यादि। तथा च तत्त्वमसीति वाक्येऽपि परोक्षत्वसर्वज्ञत्वादिवैशिष्ट्यं तत्पदप्रवृत्तिनिमित्तम्; अपरोक्षत्वकिञ्चिज्ज्ञत्वादिवैशिष्ट्यं त्वम्पदप्रवृत्तिनिमित्तम्; तथा च भिन्नप्रवृत्तिनिमित्तयोस्तत्त्वम्पदयोरेकस्मिन् चैतन्ये तात्पर्य्यसम्बन्धः सामानाधिकरण्यमित्यर्थः॥ १४२॥ सु०।

भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे तात्पर्य्यसम्बन्धः सामानाधिकरण्यमिति। सामानाधिकरण्यलक्षणमभिप्रेत्य तस्योदाहरणं तत्त्वम्पदयोरनुवर्त्तयति, सामानाधिकरण्यसम्बन्धस्तावत् इति॥ १४२॥ विद्व०।

रोचत्वादिविशिष्टचैतन्यवाचकत्वम्पदस्य चैकस्मिन् चैतन्ये तात्पर्य्यसम्बन्धः ॥ १४२ ॥

विशेषणविशेष्यभावसम्बन्धस्तु—यथा तत्रैव वाक्ये सशब्दार्थतत्कालविशिष्टदेवदत्तस्य अयं शब्दार्थैतत्कालविशिष्टदेवदत्तस्य चान्योन्यभेद-

---

विशेषणविशेष्यभावसम्बन्धस्वरूपमाह, विशेषणेत्यादि। व्यावर्त्तकं विशेषणं, व्यावर्त्त्यं विशेष्यम्; तथा च "सोऽयं देवदत्तः" इति वाक्ये एव अयंशब्दवाच्यो योऽसौ एतत्कालैतद्देश-सम्बन्धविशिष्टो देवदत्तपिण्डः अयं स इति तच्छब्दवाच्यात् तत्कालतद्देशविशिष्टदेवदत्तपिण्डात् भिन्नो न इति यदा प्रतीयते तदा तच्छब्दार्थस्य अयंशब्दवाच्यार्थनिष्ठभेदव्यावर्त्तकतया विशेषणत्वम्, अयंशब्दार्थस्य व्यावर्त्त्यत्वाद्विशेष्यत्वम्; यदा च स इति तच्छब्दवाच्यस्तत्कालतद्देशविशिष्टो देवदत्तपिण्डः सोऽयमितीदंशब्दवाच्यात् एतत्कालैतद्देशसम्बन्धविशिष्टात् अस्मात् देवदत्तपिण्डात् न भिद्यते इति यदा प्रतीयते, तदा अयंशब्दवाच्यस्य तच्छब्दार्थनिष्ठभेदव्यावर्त्तकतया विशेषणत्वं, तच्छब्दार्थस्य व्यावर्त्त्यत्वात् विशेष्यत्वम्; तथा च "अयमेव सः" "स एवायम्" इत्यन्योन्यभेदव्यावर्त्तकतया सोऽयंशब्दार्थयोः परस्परं विशेषणविशेष्यभाव इत्यर्थः।

---

तत्कालोऽतीतकालः। एतत्कालो वर्त्तमानकालः। परोक्षत्वादीत्यादिशब्दान्नियन्तृत्वादिग्रहः। अपरोक्षत्वादीत्यादिपदान्नियम्यत्वादिग्रहः। व्यवच्छेदकं विशेषणं, व्यवच्छेद्यं विशेष्यं, तयोर्भावो विशेषणविशेष्यभावः। स एव सम्बन्धः सम्बन्धवदुभयनिरूपणीयत्वादित्यभिप्रेत्य विशेषणविशेष्यभावसम्बन्धं सदृष्टान्तमाह, "विशेषण" इति। सोऽयम्पदार्थयोर्मध्ये कस्य वा विशेषणता, कस्य वा विशेष्यता, किं तद्वि-

व्यावर्त्तकतया विशेषणविशेष्यभावः। तथाऽत्रापि वाक्ये तत्पदार्थपरोक्षत्वादिविशिष्टचैतन्यस्य त्वम्पदार्थापरोक्षत्वादिविशिष्टचैतन्यस्य चान्योन्यभेदव्यावर्त्तकतया विशेषणविशेष्यभावः॥ १४२॥

लक्ष्यलक्षणभावसम्बन्धस्तु—यथा तत्रैव

---

उक्तं विशेषणविशेष्यभावं दार्ष्टान्तिके योजयति, तथाऽत्रापीत्यादि! इहापि तत्त्वमसिवाक्येऽपि त्वम्पदवाच्यं यदपरोक्षत्वकिञ्चिज्ज्ञत्वादिविशिष्टं चैतन्यं तत्पदवाच्यात् सर्वज्ञत्वादिविशिष्टचैतन्यात् न भिद्यते इति यदा प्रतीयते तदा तच्छब्दार्थस्य त्वम्पदार्थनिष्ठभेदव्यावर्त्तकतया विशेषणत्वं, त्वम्पदार्थस्य व्यावर्त्त्यत्वात् विशेष्यत्वम्; तथा च तत्पदवाच्यं यत्सर्वज्ञत्वादिविशिष्टचैतन्यं तत् त्वम्पपदवाच्यात् किञ्चिज्ज्ञत्वादिविशिष्टचैतन्यात् न भिद्यते इति यदा प्रतीयते तदा त्वम्पदार्थस्य तत्पदार्थनिष्ठभेदव्यावर्त्तकत्वेन विशेषणत्वं, तत्पदार्थस्य व्यावर्त्त्यत्वात् विशेष्यत्वम्; तथा च त्वं तदसि तत्त्वमसीति तत्त्वम्पदार्थयोः परस्परं भेदव्यावर्त्तकत्वेन परस्परं विशेषणविशेष्यभाव इत्यर्थः॥ १४२॥ सु०।

क्रमप्राप्तं लक्ष्यलक्षणभावसम्बन्धस्वरूपं निरूपयितुमाह, लक्ष्यलक्षणेत्यादि। असाधारणधर्मप्रतिपादकं वाक्यं लक्षणं,

---

शेषणकृत्यमित्यपेक्षायां द्वयोरपि पदार्थयोः परस्परापेक्षया विशेषणविशेष्यभावो भेदक्षमापोहस्य विशेषणकृत्यम्? इत्यभिप्रेत्याह, अन्योन्यभेदव्यावर्त्तकतयेति॥ १४२॥ विद्व०।

अभिधेयाविनाभूतप्रवृत्तिर्लक्षणा। सा त्रिविधा,—जहल्लक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा चेति। वाच्यार्थमशेषतः परित्यज्य तत्सम्बन्धिनि अर्थान्तरे वृत्तिर्जहल्लक्षणा, वाच्यार्थापरित्यागेन तत्सम्बन्धिनि वृत्तिरजहल्लक्षणा, वाच्यार्थैकदेशपरित्यागेनैकदेश-

सशब्दायंशब्दयोस्तदर्थयोर्वा विरुद्धतत्कालैतत्काल-विशिष्टत्वपरित्यागेन अविरुद्धदेवदत्तेन सह लक्ष्य-लक्षणभावः, तथाऽत्रापि वाक्ये तत्त्वम्पदयोः तदर्थयोर्वा विरुद्धपरोक्षत्वापरोक्षत्वादिविशिष्टत्व-परित्यागेन अविरुद्धचैतन्येन सह लक्ष्यलक्षणा-भावः । इयमेव भागलक्षणेत्युच्यते ॥ १४४ ॥

---

तत्प्रतिपाद्यमविशिष्टं वस्तु लक्ष्यम् । तथा च "सोऽयं देवदत्तः" इत्यस्मिन्नेव वाक्ये सोऽयंशब्दयोस्तदर्थयोर्वा विरुद्धतत्काल-तद्देश-विशिष्टैतत्कालैतद्देशविशिष्टत्वपरिहारेणाविरुद्धदेवदत्तत्वविशिष्ट-देवदत्तपिण्डेन सह देवदत्तविशिष्टदेवदत्तवाचकशब्दस्य लक्ष्य-लक्षणभावसम्बन्ध इत्यर्थः ।

उक्तमर्थं दार्ष्टान्तिके योजयति, तथाऽत्रापीत्यादि । इहापि तत्त्वम्पदयोस्तदर्थयोर्वा विरुद्धपरोक्षत्वापरोक्षत्वादिविशिष्टत्व-परित्यागेनतत्त्वम्पदाभ्यां लक्ष्याविरुद्धचैतन्येन सह तत्त्वम्पदयो-र्लक्ष्यलक्षणभावः सम्बन्ध इत्यर्थः । अत एव तत्त्वम्पदयो-स्तदर्थयोश्च त्यक्तविरुद्धांशयोर्लक्षणत्वम् अखण्डचैतन्यस्य लक्ष्यत्व-मिति भावः ।

ननु तत्त्वमस्यादिवाक्यानां लक्ष्यलक्षणभावसम्बन्धपुरस्कारेण चैतन्यबोधकत्वमुक्तम्, अन्यत्र तु शास्त्रे तेषां वाक्यानां भाग-लक्षणयैव चैतन्यबोधकत्वं प्रतिपाद्यते । तत्त्वमस्यादिवाक्येषु

---

वृत्तिर्जहदजहल्लक्षणा । तत्र प्रकृतवाक्ये लक्ष्यलक्षणसम्बन्धं सोदाहरणमाह, लक्ष्य-लक्षणभावसम्बन्ध इति । पदवाच्यार्थयोः परस्परविरुद्धत्वान्नान्योन्यं विशेषणविशेष्य-भाव उपपद्यते ; तथा च तत्त्वम्पदयोरपि पदयोः सामानाधिकरण्यवशात् प्रतीय-मानस्यैकवाक्यार्थस्यानुपपत्तिरिति लक्षणायां प्रसक्तायां, वक्ष्यमाणप्रकारेण जहदजह-

अस्मिन् वाक्ये नीलमुत्पलमिति वाक्यवद् वाक्यार्थो न सङ्गच्छते ॥ १४५ ॥

लक्षणा भागलक्षणेत्यादिविरोधमाशङ्क्य संज्ञाभेदो न वस्तुभेद इत्याह, इयमेवेति। तत्त्वमस्यादिवाक्यानां विरुद्धांशपरित्यागेन अविरुद्धचैतन्यमात्रबोधकत्वमेव भागलक्षणेत्युच्यते इत्यर्थः ॥ १४४ ॥ सु० ।

ननु यथा नीलोत्पलमितिवाक्ये नीलत्वविशिष्टनीलगुणस्य उत्पलत्वविशिष्टोत्पलद्रव्यस्य च स्वव्यतिरिक्तशुक्लादिगुणान्तरपटादिद्रव्यान्तरव्यावर्त्तकत्वेन विशेषणविशेष्यभावनिरूपितत्ज्जिन्नसंसर्गस्य नीलगुणवैशिष्ट्यस्य वाक्यार्थत्वं, तथा इहापि तत्त्वमस्यादिवाक्ये तत्पदार्थस्य परोक्षत्वादिविशिष्टेश्वरचैतन्यस्य त्वम्पदार्थस्यापरोक्षत्वादिविशिष्टजीवचैतन्यस्य च अन्योन्यभेदव्यावर्त्तकतया विशेषणविशेष्यभूतसर्वज्ञत्वकिञ्चिज्ज्ञत्वोभयनिरूपितसंसर्गो वा सर्वज्ञत्वादिविशिष्टस्य किञ्चिज्ज्ञत्वादिविशिष्टेन सह ऐक्यं वाक्यार्थो भवतु इत्याशङ्क्य दृष्टान्तदार्ष्टान्तिकयो-

लक्षणयोः प्रकृतासङ्गतौ, पदवाच्यगतविरुद्धांशप्रहाणेनाविरुद्धांशलक्षणया सामानाधिकरण्ये सति, वाक्यादखण्डार्थप्रतिपत्तिरिति भावः। अंशान्तरपरित्यागेनांशान्तरलक्षणायाः शास्त्रप्रसिद्धां संज्ञां सङ्गिरते, इयमेवेति। जहदजहल्लक्षणेदंशब्दार्थः। अयं भावः ;—तत्त्वम्पदयोः सामानाधिकरण्यं तावच्छ्रूयते न तत्तयोर्भिन्नार्थत्वे सम्भवति, स्तम्भकुम्भपदयोस्तददर्शनात्। नाप्येकार्थाभिधायकत्वेन वैश्वदेव्यामिक्षेतिवत् तद्वत् तद्धितादेरेकार्थसमर्पकस्य कारणस्येहादर्शनात्। तथाहुः,—"आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः। आमिक्षापदसान्निध्यात् तस्यैव विषयार्पणम् ॥" इति। [ तन्त्र० वार्त्ति० २।२।२३ ] परिशेषादेकार्थलक्षकत्वेनैवेति ॥ १४४ ॥ विद्व० ।

ननु तत्त्वम्पदयोः सामानाधिकरण्यं विनापि लक्षणयैकार्थ्यमुपपत्स्यते नीलमुत्पलमितिवदित्याशङ्क्याह, अस्मिन् इति। अखण्डार्थत्वस्य विवक्षितत्वादित्यभिसन्धिः ॥ १४५ ॥ विद्व० ।

तत्र नीलपदार्थनीलगुणस्य उत्पलपदार्थोत्पलद्रव्यस्य च शौक्ल्यपटादिभेदव्यावर्त्तकतयाऽन्योन्यविशेषणविशेष्यभावसंसर्गस्य, अन्यतरविशिष्टस्य अन्यतरस्य वा तदैक्यस्य वाक्यार्थत्वाङ्गीकारे प्रमाणान्तरविरोधाभावात् तद्वाक्यार्थः सङ्गच्छते ॥ १४६ ॥

अत्र तु तत्पदार्थपरोक्षत्वादिविशिष्टचैतन्यस्य त्वम्पदार्थापरोक्षत्वादिविशिष्टचैतन्यस्य चान्योन्य-

---

वैषम्यान्नैवमित्याह, अस्मिन्नित्यादि। अस्मिन् तत्त्वमसीतिवाक्ये नीलोत्पलमित्यादिवाक्यवत् संसर्गो वा विशिष्टो वा वाक्यार्थो न सङ्गच्छते इत्यर्थः ॥ १४५ ॥ सु०।

नीलोत्पलमितिवाक्यस्य संसर्गवैशिष्ट्यार्थप्रतिपादकत्वकल्पने विरोधाभावं दर्शयति, तत्र त्विति। नीलोत्पलपदार्थयोः गुणगुणिनोर्विशेषणविशेष्यभावसंसर्गस्य नीलगुणविशिष्टोत्पलयोरैक्यस्य वाक्यार्थत्वाङ्गीकारे प्रत्यक्षादिप्रमाणान्तरविरोधाभावात् तत्र तथा सङ्गच्छते इति भावः ॥ १४६ ॥ सु०।

तत्त्वमसीतिवाक्ये तु तत्त्वम्पदार्थयोः किञ्चिज्ज्ञत्वादिविशिष्टजीवचैतन्यस्य सर्वज्ञत्वादिविशिष्टेश्वरचैतन्यस्य वा

---

ननु नीलोत्पलवाक्येऽपि स्यादखण्डार्थता नेत्याह, तत्रेति। शौक्ल्यादिव्यावर्त्तकनीलगुणस्य पटादिव्यावर्त्तकोत्पलद्रव्यस्य च गुणगुणिभावेन विरोधाभावात् तत्संसर्गैक्यस्य वा तदन्यतरविशिष्टस्यान्यतरस्य वा वाक्यार्थत्वान्नाखण्डार्थत्वं, मुख्यैक्यस्य तत्राविवक्षितत्वादित्यर्थः ॥ १४६ ॥ विद्व०।

प्रकृतवाक्ये नीलोत्पलवाक्याद्वैषम्यमाह, अत्र तु इति। यद्यपि तत्त्वम्पदार्थयोः स्वरूपतो न प्रत्यक्षत्वं तत्पदार्थस्याद्वितीयत्वात् त्वम्पदार्थस्य च द्रष्टृत्वाद्द्रष्टुर्दृश्यत्वानुप-

भेदव्यावर्त्तकतया विशेषणविशेष्यभावसंसर्गस्य अन्यतरविशिष्टस्य अन्यतरस्य वा तदैक्यस्य वाक्यार्थत्वाङ्गीकारे प्रत्यक्षादिप्रमाणविरोधात् वाक्यार्थो न सङ्गच्छते। तदुक्तं—"संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र सम्मतः। अखण्डैकरसत्वेन वाक्यार्थो विदुषां मतः॥" इति [ पञ्चदशी ७ परि० ७५ श्लोकः ] ॥ १४७॥

---

अल्पानल्पविशेषणविशेष्यभावसंसर्गस्य तदुभयविशिष्टचैतन्यैक्यस्य वा वाक्यार्थत्वाङ्गीकारे प्रत्यक्षादिप्रमाणान्तरविरोधात् पूर्वस्माद्वैषम्यं दर्शयति, अत्र त्वित्यादि ॥ १४७ ॥ सु० ।

---

पत्तेः, तथा च तद्बोटस्याप्यप्रत्यक्षता, तथापि तत्त्वम्पदयोः परोक्षापरोक्षार्थाधिगतसङ्गत्योः श्रवणसमयेऽपरिशोधितपदार्थस्य पुंसो भवति विरोधस्फूर्त्तिरिति तदपेक्षया प्रत्यक्षादिप्रमाणविरोधादित्युक्तम्। तथा च तत्त्वम्पदयोः शबलांशे व्युत्पन्नयोर्विरुद्धार्थविषयकत्वेनक्यनिष्ठत्वाभावान्न विवक्षितं सामानाधिकरण्यमुपपद्यते इति भावः। एतदुक्तं भवति,—न तावत्तत्त्वमर्थयोर्नीलोत्पलवद्गुणगुणिभाव उभयोरपि द्रव्यत्वात्; नापि कुण्डलसुवर्णवत्कार्य्यकारणभावो नित्यत्वादविकृतत्वाच्च; नापि भूम्यूषरादिवदंशांशिभावो निरवयवत्वात्; नापि क्रियातद्वद्भावो बाणादिवन्निष्क्रियत्वात्; नापि गोत्वशाबलेयादिवज्जातिव्यक्तिभावो द्रव्यत्वादेव; अत एव न विशेषविशेषिभावोऽपि। वस्तुतस्तु विज्ञानघनमात्रत्वावधारणान्नेति नेतीत्यशेषविशेषप्रत्याख्यानेन निर्धर्म्मकत्वावधारणाच्च न केनापि प्रकारेण तत्त्वमस्यादिवाक्यानां संसृष्टार्थनिष्ठत्वशङ्काऽवकाशं लभते। न चेदं वाक्यं त्वमिन्द्रोऽसीतिवत् स्तुतिपरं, नवकृत्वोऽभ्यासवैयर्थ्यप्रसङ्गात्; न हि स्तुतिः पुनःपुनः परिचोदनापूर्व्वकं क्वचिदभ्यस्यते; अत एव नार्थवादोऽनन्यशेषत्वाच्च; न ह्यस्मिन् प्रकरणेऽन्यत् किञ्चित्प्रधानवाक्यमुपलभ्यते, यच्छेषत्वेनेदमर्थवादरूपं भवेत्। नापि राजपुरुषे राजायमितिवदौपचारिकम्, अप्रमितभेदयोरैक्यस्यौपचारिकत्वानुपपत्तेः; नापि विप-

अत्र "गङ्गायां घोषः प्रतिवसति" इति-वाक्यवत् जहल्लक्षणापि न सङ्गच्छते ॥ १४८ ॥

तत्र तु गङ्गाघोषयोराधाराधेयभावलक्षणस्य वाक्यार्थस्य अशेषतो विरुद्धत्वाद्वाक्यार्थमशेषतः परित्यज्य तत्सम्बन्धितीरलक्षणाया युक्तत्वाज्जहल्लक्षणा सङ्गच्छते ॥ १४९ ॥

---

ननु तत्त्वमस्यादिवाक्यमखण्डार्थं बोधयति किं जहत्स्वार्थ-लक्षणया, किमजहत्स्वार्थलक्षणया, आहोस्वित् जहदजहत्-स्वार्थलक्षणया इति त्रिधा विकल्पः। आद्ये दूषणमाह, अत्रेति। अत्र तत्त्वमसीतिवाक्ये जहत्स्वार्थलक्षणा न सङ्गच्छते इत्यन्वयः।

तदेव दर्शयितुं जहत्स्वार्थलक्षणाया उदाहरणं तावदाह, गङ्गायामित्यादि। "मानान्तरविरोधे तु मुख्यार्थस्यापरिग्रहे। मुख्यार्थेनाविनाभूते प्रवृत्तिर्लक्षणेष्यते ॥" इति वचनात् गङ्गायां घोषवसनासम्भवात् "गङ्गायां घोषः" इति वाक्यस्य मुख्यार्थ-विरोधे सति मुख्यार्थं परित्यज्य लक्षणया वृत्त्या तत्सम्बन्धिनि तीरे घोषावस्थानप्रदिपादनात् तत्र जहत्स्वार्थलक्षणाङ्गीकारो

---

य्ययः संशयो वाव सम्भवति, श्रुतेः स्वतःप्रामाण्यात्। तस्मात् तत्त्वमस्यादिवाक्यम-खण्डार्थनिष्ठम्, अकार्य्यकारणद्रव्यमात्रनिष्ठत्वे सति सामानाधिकरण्यवाक्यत्वात् "सोऽयं देवदत्तः" इति वाक्यवदिति ; तदेवं, पदयोरखण्डार्थनिष्ठत्वेन सामानाधि-करण्यं वाच्यार्थांशे विरोधाद्विना लक्षणां न सङ्गच्छते इत्युक्तम् ॥ १४७ ॥ विद्व० ।

प्रकृते वाच्यार्थस्यांशेषपरित्यागायोगान्न जहल्लक्षणा सङ्गच्छते इत्याह, अत्रेति ॥ १४८ ॥ विद्व० ।

तत्र भागलक्षणामेव परिशेषयितुं लक्षणान्तरं व्युदस्यति, तत्र त्वित्यादिना। घोष

अत्र तु परोक्षापरोक्षचैतन्यैकत्वलक्षणस्य वाक्यार्थस्य भागमात्रे विरोधाद्भागान्तरमपि परित्यज्यान्यलक्षणाया अयुक्तत्वात् जहल्लक्षणा न सङ्गच्छते ॥ १५० ॥

न च गङ्गापदं स्वार्थपरित्यागेन तीरपदार्थं

---

युज्यते इत्याह, तत्र त्वित्यादि। आधाराधेयभावलक्षणं सर्वथा परित्यज्येत्यर्थः ॥ १४८। १४९ ॥ सु०।

तत्त्वमसीति वाक्ये प्राक् प्रतिज्ञातं जहत्स्वार्थलक्षणासम्भवमाविष्करोति, अत्र तु इत्यादि। तुशब्दः पूर्वस्माद्वैषम्यं द्योतयति। तत्त्वमसीतिवाक्ये परोक्षापरोक्षचैतन्यैकत्वलक्षणस्य वाक्यार्थस्य विरोधाभावात् परोक्षत्वापरोक्षत्वप्रतिपादकत्वांशे विरोधात् चैतन्यैकत्वे विरोधाभावात् गङ्गाघोषादिवाक्यवत् सर्वात्मना मुख्यार्थपरित्यागासम्भवात् जहत्स्वार्थलक्षणा न सम्भवतीत्यर्थः।

तत्र हेतुमाह, भागान्तरमपीति। विरुद्धयोः परोक्षत्वापरोक्षत्वयोरेकत्वासम्भवेन तत्परित्यागेऽपि चैतन्यभागस्यैकत्वे विरोधाभावात् त्यागो न युज्यते इत्यर्थः ॥ १५० ॥ सु०।

ननु यथा गङ्गायां घोषः प्रतिवसतीति वाक्ये गङ्गापदं प्रवाहलक्षणं स्वार्थं परित्यज्य स्वसम्बन्धितीरपदार्थं लक्षयति, तथा तत्त्वमसीतिवाक्ये तत्पदं स्वार्थं परोक्षत्वादिविशिष्टं परित्यज्य

---

आभीरनिवासः कुत इत्यपेक्षायां गङ्गापदे जहल्लक्षणा सम्भवति, वाच्यार्थस्य तत्राशेषस्यानन्वयेन परित्याज्यत्वादित्याह, तत्र तु गङ्गाघोषयोरिति ॥ १४९।१५० ॥ वि०।

ननु विशेषणांशत्यागेऽपि विशेषणाभावे विशिष्टाभावन्यायेन विशिष्टस्वार्थपरित्यागाज्जहल्लक्षणैव तत्त्वम्पदयोरपि गङ्गापदवत् स्यादित्याशङ्क्य वैषम्येण प्रत्याचष्टे,

यथा लक्षयति, तथा तत्पदं त्वम्पदं वा स्वार्थ-परित्यागेन तत्पदार्थं त्वम्पदार्थं लक्षयतु, अतः कुतो जहल्लक्षणा न सङ्गच्छते इति वाच्यम्; तत्र तीरपदाश्रवणेन तदर्थाप्रतीतौ लक्षणया तत्प्र-तीत्यपेक्षायामपि तत्त्वम्पदयोः श्रूयमाणत्वेन तदर्थप्रतीतौ लक्षणया पुनः अन्यतरपदेन अन्य-तरपदार्थप्रतीत्यपेक्षाभावात् ॥ १५१ ॥

---

जीवचैतन्यं लक्षयतु; एवं त्वम्पदमपि स्वार्थं किञ्चिज्ज्ञत्वादि-विशिष्टं परित्यज्य ईश्वरचैतन्यं वा लक्षयतु, तस्मात् जहत्स्वार्थ-लक्षणैव भवतु इत्याशङ्क्य निराकरोति, न चेत्यादि।

निराकरणप्रकारमेवाह, तत्रेत्यादिना। श्रुतवाक्यस्य मुख्यार्थ-विरोधे मुख्यार्थसम्बन्धिनि अश्रुतपदार्थे लक्षणेति सर्वजनसिद्धम्। तथा च "गङ्गायां घोषः" इत्यत्र श्रुतवाक्यार्थस्य गङ्गाघोषयोराधा-राधेयभावसम्बन्धस्य विरोधे सति श्रूयमाणं गङ्गापदं स्वार्थपरि-त्यागेन तीरपदार्थं लक्षयतीति युक्तं गङ्गापदार्थस्य तीरपदार्थ-प्रतीतिसापेक्षत्वात्। इह तु श्रूयमाणतत्त्वम्पदयोर्मुख्यतयैव तदर्थसर्वज्ञत्वाकिञ्चिज्ज्ञत्वादिविशिष्टप्रतीतौ सत्यामपि लक्षणया तत्पदेन त्वम्पदार्थप्रतीत्यपेक्षाभावात् त्वम्पदेन तत्पदार्थप्रतीत्य-पेक्षाभावाच्च, मुख्यार्थे सम्भवति लक्षणाया अन्याय्यत्वात् जहत्-स्वार्थलक्षणाऽपि न सम्भवतीत्यर्थः ॥ १५१ ॥ सु०।

---

न चेति। यथा पदादेव वाक्यार्थान्वयिपदार्थप्रतीतौ लक्षणावैयर्थ्यं, तथा विशिष्यांश-परित्यागेऽपि लक्षणावैयर्थ्यं, तत्त्वम्पदार्थातिरिक्तस्य तत्सम्बन्धिना वाक्यार्थान्वयिनोऽर्थस्याप्रसिद्धेरिति भावः ॥ १५१ ॥ विद्व०।

अत्र शोणो धावतीतिवाक्यवदजहल्लक्षणाऽपि न सम्भवति ॥ १५२ ॥

तत्र शोणगुणगमनलक्षणस्य वाक्यार्थस्य विरुद्धत्वात्तदपरित्यागेन तदाश्रयाश्वादिलक्षणया तद्विरोधपरिहारसम्भवात् अजहल्लक्षणा सम्भवति। अत्र तु परोक्षत्वापरोक्षत्वादिविशिष्टचैतन्यैकत्वस्य वाक्यार्थस्य विरुद्धत्वात्तदपरित्यागेन तत्सम्बन्धिना यस्यकस्यचिदर्थस्य लक्षितत्वेऽपि तद्विरोधपरिहारासम्भवादजहल्लक्षणाऽपि न सम्भवत्येव ॥१५३॥

---

द्वितीयं दूषयति, अत्र शोण इत्यादि। अत्र तत्त्वमसीति वाक्ये अजहत्स्वार्थलक्षणाऽपि न सम्भवतीत्यन्वयः ॥१५२॥ सु०। कुतः ? इत्यत आह, तत्रशोणेत्यादि। तत्र शोणो धावतीत्यादिवाक्ये शोणगुणस्य गमनासम्भवेन वाक्यस्य मुख्यार्थविरोधे सति श्रूयमाणं शोणपदं स्वार्थापरित्यागेन स्वाश्रयमश्वादिकं लक्षयतीति युक्तम्। अत्र तु तत्त्वमस्यादिवाक्ये तत्त्वम्पदार्थस्य परोक्षत्वापरोक्षत्वादिविशिष्टचैतन्यैकत्वलक्षणस्य मुख्यवाक्यार्थस्य विरुद्धत्वात् परोक्षत्वापरोक्षत्वापरित्यागेन तद्विशिष्टचैतन्यलक्षणार्थस्य लक्षितत्वेऽपि तद्विरोधपरिहाराभावात् अजहत्स्वार्थलक्षणा न सम्भवतीत्यर्थः ॥ १५३ ॥ सु०।

---

अजहत्स्वार्थामप्येव व्युदस्यति, अत्र शोण इति। शोणपदे स्ववाच्यशोणगुणापरित्यागेन तदाधारलक्षणावत् तत्पदे त्वम्पदे च स्ववाच्यापरित्यागेन तत्सम्बन्धिनी यस्यकस्यचिदनिर्द्दिष्टविशेषस्यार्थान्तरस्य प्रतीत्यै लक्षणाङ्गीकरणेऽपि वाच्यार्थयोर्विरोधस्यापरिहारान्नाजहल्लक्षणाप्येव युज्यत इत्यर्थः ॥ १५२।१५३ ॥ विद्व०।

न च तत्पदं त्वम्पदं वा स्वार्थविरुद्धांशपरित्यागेन अंशान्तरसहितं तत्पदार्थं त्वम्पदार्थं वा लक्षयतु, अतः कथं प्रकारान्तरेण भागलक्षणाङ्गीकरणमिति वाच्यम्, एकेन पदेन स्वार्थांशपदार्थान्तरोभयलक्षणाया असम्भवात्, पदान्तरेण तदर्थप्रतीतौ लक्षणाया पुनरन्यतरपदार्थप्रतीत्यपेक्षाभावाच्च ॥ १५४ ॥

तस्माद् यथा सोऽयं देवदत्त इति वाक्यं तदर्थो

---

ननु तत्पदं स्वार्थं विरुद्धपरोक्षत्वादिधर्मं परित्यज्य अविरुद्धचैतन्यांशापरित्यागेन त्वम्पदार्थं किञ्चिज्ज्ञत्वादिविशिष्टं जीवचैतन्यं लक्षयतु, त्वम्पदं वा स्वार्थं विरुद्धापरोक्षत्वादिधर्मं परित्यज्य अविरुद्धचैतन्यांशापरित्यागेन तत्पदार्थं सर्वज्ञत्वादिविशिष्टमीश्वरचैतन्यं लक्षयतु, किं भागलक्षणाङ्गीकारेण इत्याशङ्क्य निराकरोति, न च तत्पदमिति । एकेन तत्पदेन त्वम्पदेन वा स्वार्थांशापरित्यागेन स्वार्थांशपदार्थान्तरोभयलक्षणाया असम्भवादित्यर्थः ।

अजहत्स्वार्थलक्षणासम्भवे हेत्वन्तरमाह, पदान्तरेणेत्यादि । तत्पदेन त्वम्पदेन वा तत्तदर्थप्रतीतौ सत्यां लक्षणया पुनरन्यतरस्य अन्यतरप्रतीत्यपेक्षाभावादित्यर्थः ॥ १५४ ॥ सु० ।

अतः परिशेषात् तृतीयपक्ष एवाङ्गीकर्त्तव्य इत्युपसंहरति,

---

प्रकारान्तरेणाजहल्लक्षणामुद्दश्य निराचष्टे, न चेति । सकृदुच्चरितस्य पदस्य युगपदुभयलक्षकत्वासम्भवादित्यर्थः । अत्रापि पूर्वोक्तं दूषणं प्रसञ्जयति, पदान्तरेण इति ॥ १५४ ॥ विद्व० ।

परिशेषाद्भागलक्षणामन्तरेण नाखण्डवाक्यार्थसिद्धिरतस्तयैव लक्षणयैकार्थ-

वा तत्कालैतत्कालविशिष्टदेवदत्तलक्षणस्य वाक्यार्थस्यांशे विरोधात् विरुद्धतत्कालैतत्कालविशिष्टांशं परित्यज्याविरुद्धं देवदत्तांशमात्रं लक्षयति; तथा तत्त्वमसीति वाक्यं तदर्थो वा परोक्षत्वापरोक्षत्वादिविशिष्टचैतन्यैकत्वलक्षणस्य वाक्यार्थ-

---

-तस्मादित्यादि। यस्मात् तत्त्वमस्यादिवाक्ये जहत्स्वार्थलक्षणाजहत्स्वार्थलक्षणयोरसम्भवः, तस्मात् जहदजहत्स्वार्थलक्षणया विरुद्धांशं परित्यज्य अविरुद्धाखण्डचैतन्यमात्रं लक्षयतीति योजना।

तत्र दृष्टान्तमाह, यथेति। यथा "सोऽयं देवदत्तः" इति वाक्ये प्रागुक्तजहत्स्वार्थलक्षणाजहत्स्वार्थलक्षणयोरसम्भवेन तदर्थस्य तत्कालतद्देशविशिष्टस्यैतत्कालैतद्देशविशिष्टस्य च देवदत्तलक्षणवाक्यार्थस्य एकस्मिन्नंशे तत्कालैतत्कालवैशिष्ट्यभागे विरोधदर्शनात् तत्परित्यागेन अविरुद्धदेवदत्तपिण्डमात्रं लक्षयतीत्यर्थः। "मानान्तरविरोधे तु" [ वाक्यवृत्तिः ४८ ] इत्युक्तन्यायेनेत्यर्थः।

उक्तमर्थं दार्ष्टान्तिके योजयति, तथा तत्त्वमसीत्यादि। तथा तत्त्वमस्यादिवाक्यस्यापि परोक्षत्वापरोक्षत्वादिविशिष्टचैत-

---

पर्य्यवसायित्वेन पदयोः सामानाधिकरण्यमित्युपसंहरति, तस्मात् इति। सोऽयमिति पदद्वयं वाक्यशब्दार्थः, देवदत्तपदस्य सामानाधिकरण्यसिद्धैक्यस्पष्टीकरणार्थत्वाल्लक्षणाविचारानुपयोगात्। यद्यपि पदधर्मो लक्षणा, तथापि अभिहितान्वयमतवत् पदार्थस्यापि लक्षकत्वमभ्युपगम्य पदार्थो वेत्युक्तम्। अन्यत्समानम्।

अत्र केचिदाहुः पदद्वये लक्षणानुपपन्ना। सोयं देवदत्त इत्युक्ते सशब्देनातीतदेशकालपरित्यागेन लक्षिते देवदत्तस्वरूपे वर्त्तमानदेशकालवैशिष्ट्यमयम्पदेन प्रतिपाद्यते तथा च पूर्वोत्तरदेवदत्तस्वरूपाभेदसिद्धेरिति। तदयुक्तं, विशिष्टस्य केवलाद्भिन्नत्वात्। यथा केवलो विशिष्टाद्भिन्नस्तथा विशिष्टोऽपि केवलाद्भिन्न एव। तथा च विशिष्ट-

स्यांशे विरोधाद्विरुद्धपरोक्षत्वापरोक्षत्वविशिष्टांशं परित्यज्य अविरुद्धमखण्डचैतन्यमात्रं लक्षयतीति ॥ १५५ ॥

अथाधुना "अहं ब्रह्मास्मि" [ बृह० उप०

न्यैकत्वलक्षणमुख्यार्थप्रतिपादकत्वासम्भवात् जहदजहत्स्वार्थ-लक्षणया विरुद्धपरोक्षत्वापरोक्षत्वादिवैशिष्ट्यांशपरित्यागेन अविरुद्धाखण्डचैतन्यमात्रप्रतिपादकत्वं तस्य इत्यर्थः ॥ १५५ ॥ सु० ।

अखण्डचैतन्यप्रतिपादकस्य तत्त्वमसीतिवाक्यस्यार्थं सप्रपञ्चमभिधाय इदानीं यजुर्वेद्यनुभववाक्यार्थो वर्ण्यते इत्याह, अथाऽधुनेत्यादि । गुरुमुखान्नवक्तत्वस्तत्त्वमस्यादिवाक्यश्रवणात् देहाद्यहङ्कारान्तजड़पदार्थसकलदृश्यविलक्षणप्रत्यगात्मनः शुद्धेन परमात्मना सहैकत्वबोधानन्तरं कश्चिदधिकारी लब्धावसरं सर्वोपाधिविनिर्मुक्तं सच्चिदानन्दैकरसमनुभवेन जिज्ञासुराचार्य्यो-पदिष्टम् "अहं ब्रह्मास्मि" [ बृह० उप० १ अध्या० ४ ब्रा०

विषयस्यार्थंशब्दस्यापि विना लक्षणां न तत्स्वरूपनिष्ठत्वं सम्भवति ; तदभावे च सोऽयम्पदयोः सामानाधिकरण्येन देवदत्तैक्यप्रतिपादकतेत्यास्तां तावत् । अपरे पुनराहुः,—न पदवाच्यार्थयोः परस्परविरोधाल्लक्षणाश्रीयते, किन्तु वाच्यार्थैक्ये तात्पर्य्या-भावादिति । तन्न, तात्पर्य्याभावावगमस्यापि विरोधस्फूर्त्त्यधीनत्वात् ; अन्यथा वेद-वाक्यप्रतिपादितेऽर्थे संवादिविसंवादिप्रमाणान्तराविषये तात्पर्य्यानवगमाद्योगात् । तस्मात्सुष्ठूक्तं "वाक्यार्थस्यांशे विरोधात्" इति ॥ १५५ ॥ विद्व० ।

तदेवम् "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" [ ब्रह्म० सू० ४ अध्या० १ पा० ३ सूत्रम् ] इति न्यायेन जीवस्य नित्यशुद्धबुद्धमुक्तसत्यज्ञानानन्तानन्दपरिपूर्णे ब्रह्मणि आत्मत्वोपदेशवाक्यार्थं सप्रपञ्चं निरूप्येदानीमवगतस्वरूपस्यानुभवावभासिवाक्यार्थं वर्ण-यितुमुपक्रमते, अथ इत्यादिना । उपदेशवाक्यार्थनिरूपणानन्तर्य्यमथशब्दार्थः ।

१ अध्या० ४ ब्रा० १० मन्त्रः ] इत्यनुभववाक्यार्थो वर्ण्यते ॥ १५६ ॥

एवमाचार्य्येणाध्यारोपापवादपुरःसरं तत्त्वम्पदार्थौ शोधयित्वा वाक्येनाखण्डार्थेऽवबोधितेऽधिकारिणोऽहं नित्यशुद्धबुद्धमुक्तसत्यस्वभावपरमानन्दानन्ताद्वयं ब्रह्मास्मीत्यखण्डाकाराकारिता चित्तवृत्तिरुदेति ॥ १५७ ॥

---

१० मन्त्रः ] इति वाक्यार्थमनुस्मरन् स्वात्मानन्दमनुभवतीत्यर्थः ॥ १५६ ॥ सु० ।

तत्प्रकारमेवाह, एवमित्यादिना। एवं सङ्क्षेपेण वक्ष्यमाणप्रकारेण अधिकारिणश्चित्तवृत्तिरुदेतीति सम्बन्धः।

कदा उदेति ? इत्यपेक्षायामाह, आचार्य्येण इति। आचार्य्येण अविषये उपाधिरहितेऽसङ्गे निष्कले चैतन्ये शशशृङ्गायमाणाविद्यया अहङ्कारादिशरीरान्तमिथ्यापदार्थमध्यारोपतदपवादपुरःसरं तत्त्वम्पदार्थौ शोधयित्वा तत्त्वमसीतिवाक्येन जहदजहत्स्वार्थलक्षणया विरुद्धांशपरित्यागेन अखण्डार्थचैतन्ये ज्ञाते सतीत्यर्थः।

किं विषयिणी चित्तवृत्तिरुदेति ? इत्यसत्त्वशङ्कां निवारयति, अहमिति। अहं प्रत्यगात्मा परं ब्रह्मास्मीत्यन्वयः।

ब्रह्मानित्यत्वशङ्कां निराकरोति, नित्येति। शुद्धपदेन अविद्यादिदोषराहित्यम्। बुद्धपदेन स्वप्रकाशपरत्वेन जाड्या-

---

अधिकारिणो विधिवदधीतवेदेत्यादिखण्डोक्तलक्षणस्यासम्भावनाविपरीतभावनाख्यचित्तदोषरहितस्याध्यारोपादिन्यायेनाचार्य्योपदेशसमनन्तरमेव नित्यशुद्धबुद्धत्वादि-

सा तु चित्प्रतिबिम्बसहिता सती प्रत्यगभिन्नम्

दिकं व्यवच्छिद्यते। मुक्तपदेन सर्वोपाधिराहित्यम्। सत्यमित्यविनाशिस्वभावत्वम्। परमानन्दपदेन वैषयिकमनुष्यानन्दादिचतुर्मुखब्रह्मानन्दपर्य्यन्तानां कर्मजन्यत्वेन सातिशयत्वेन क्षयिष्णुत्वेन च तुच्छत्वात् तेभ्यो विलक्षणं निरतिशयानन्दस्वरूपत्वं प्रतिपाद्यते। अनन्तपदेन घटादिवत् परिच्छेदराहित्येन देशतः कालतो वस्तुतश्चापरिच्छिन्नत्वं बोध्यते। अद्वयमिति नानात्वनिषेधेन एकत्वं बोध्यते इत्यर्थः॥ १५७॥ सु०।

ननु यथा दीपप्रभा आदित्यमण्डलं न व्याप्नोति न च प्रयोजनमास्ते तथा नित्यशुद्धस्वप्रकाशमात्मानं जड़ा चित्तवृत्तिः कथं विषयीकृत्योदेति किं प्रयोजनं वा? इत्याशङ्क्याह, सा त्वित्यादि। सा चित्तवृत्तिः न शुद्धब्रह्मविषयिणी, किन्तु अज्ञान-

---

विशेषणं ब्रह्माहमस्मीत्यखण्डाकारान्तःकरणवृत्तिरुदेति साक्षात्काररूपा न पुनः परोक्षार्थाकारेत्यर्थः। न च शब्दस्य परोक्षज्ञानजनकत्वस्वाभाव्यान्न तेनापरोक्षाचित्तवृत्तिरुदेतीति वाच्यं, "यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः" [बृह० उप० ३ अध्या० ४ ब्रा० १ मन्त्रः] इति श्रुतेर्नित्यापरोक्षं ब्रह्मात्मस्वरूपं तस्मिन् परोक्षज्ञानं जनयतः शब्दस्याप्रामाण्यापत्तेः। किञ्च, ज्ञानस्य परोक्षत्वापरोक्षत्वे न करणनिबन्धने किन्त्वर्थनिबन्धने एकस्यैव मनसः सुखादिविषयकापरोक्षज्ञानहेतुत्वस्यातीतार्थस्मृतिहेतुत्वस्य च दर्शनात्; तत्र सहकारिभेदात् तथाभाव इति चेत् तर्हीहाप्यस्ति सहकारिभेदः शब्दप्रतिपत्तुः शब्दार्थनैकट्यानैकट्यलक्षणः। निकटं ह्यत्यन्तमात्मनः स्वरूपं ब्रह्म न त्वस्वरूपमुपाध्यन्तराविष्टमिन्द्रवरुणादिरूपम्। तस्माद्दशमस्त्वमसीत्यादिवाक्यवत् तत्त्वमस्यादिवाक्यानामपरोक्षज्ञानजनकत्वं युक्तमिति भावः॥ १५६।१५७॥ विद्व०।

एवमुत्पन्नाखण्डाकारा चित्तवृत्तिः किं करोतीति तदाह, सा तु इति। वृत्तेर्जडत्वादज्ञानबाधनासम्भवमाशङ्क्य तां विशिनष्टि, "चित्प्रतिबिम्बसहिता सती" इति। प्रत्यक्चिति व्याप्तेति यावत्। ब्रह्मणो विषयीकरणं नाम वृत्तेस्तदाभि-

अज्ञातं परं ब्रह्म विषयीकृत्य तद्गताज्ञानमेव बाधते, तदा पटकारणतन्तुदाहे पटदाहवत् अखिलकार्य्यकारणेऽज्ञाने बाधिते सति तत्-कार्य्यस्याखिलस्य बाधितत्वात् तदन्तर्भूताखण्डाकाराकारिता चित्तवृत्तिरपि बाधिता भवति॥ १५८॥

---

विशिष्टप्रत्यगभिन्नपरब्रह्मविषयिणी ; सा च चैतन्यप्रतिबिम्ब-संवलिता सती चैतन्यगतमज्ञानं निवर्त्तयति। तस्याश्चैतन्यावरकाज्ञाननिवृत्तिरेव प्रयोजनमित्यर्थः।

ननु अधिकारिणस्तत्त्वमस्यादिवाक्यश्रवणोत्पन्नाखण्डचैतन्य-वृत्त्या तदाश्रिताज्ञाने निवारितेऽपि तत्कार्य्यस्य सकलचराचर-प्रपञ्चस्य प्रत्यक्षतया भासमानत्वात् कथमद्वैतसिद्धिः? इत्याशङ्क्य कारणाज्ञाननाशे तत्कार्य्यसकलप्रपञ्चनाशादद्वैतसिद्धिः इत्येतत् सदृष्टान्तमाह, तदा पटकारणेत्यादि।

ननु अज्ञाननाशेन तत्कार्य्यप्रपञ्चनाशोऽस्तु तथाप्यखण्डाकारवृत्तेरनिवृत्तेः अद्वैतहानिरित्याशङ्क्याह, तदन्तर्भूतेति। अखण्डाकारचित्तवृत्तेरपि अज्ञानतत्कार्य्यान्तर्भूतत्वात् तन्निवृत्त्या तन्निवृत्तेर्नाद्वैतहानिरित्यर्थः॥ १५८॥ सु०।

---

मुख्यम्। ब्रह्मशब्दस्य कार्य्यब्रह्मविषयत्वं व्यावर्त्तयति, परमिति। तस्य प्रमेयत्वमाह, अज्ञातमिति। तस्य ताटस्थ्यं वारयति, प्रत्यगभिन्नमिति। अज्ञानमेव बाधत इति।—एवकारेण ब्रह्मणः प्रकाश्यत्वं व्यावर्त्त्यते ; एवंविधया चित्तवृत्त्या संसारमूलाज्ञाने बाधिते सत्यप्यस्या वृत्तेर्बाधकाभावान्मोक्षोऽपि सप्रपञ्चः स्यादित्यत आह, तदेति। वृत्तेर्बाधकाभावेऽपि दग्धेन्धनानलवत् स्वयमेव विनश्यति ततो न सप्रपञ्चो मोक्ष इत्यर्थः॥ १५८॥ विद्व०।

तत्र प्रतिविम्बितं चैतन्यमपि यथा दीपप्रभा आदित्यप्रभावभासनासमर्था सती तयाऽभिभूता भवति, तथा स्वयं प्रकाशमानप्रत्यगभिन्नपरब्रह्मावभासनानर्हतया तेनाभिभूतं सत् स्वोपाधिभूताखण्डवृत्तेर्बाधितत्वात् दर्पणाभावे

---

ननु तथापि अखण्डाकारवृत्तिप्रतिविम्बितचैतन्याभाससत्त्वात् कथमद्वैतसिद्धिः ? इत्याशङ्क्याह, तत्रेत्यादि । वृत्तिनिवृत्तौ तत्प्रतिविम्बितचैतन्यस्य विम्बावभासनासमर्थत्वात् वृत्त्युपाधिबाधेन तत्प्रतिविम्बचैतन्यमपि चैतन्यमात्रतया अवशिष्यते ; दर्पणोपाधिविगमे तत्प्रतिविम्बितमुखाभासस्य विम्बभूतमुखमात्रतावशेषवदित्यर्थः । अयं भावः,—शोधिततत्त्वम्पदार्थस्य अधिकारिणः तद्विजृम्भितगुरुशास्त्रादिभ्यः तत्त्वमसीत्युपदेशेन अहं नित्यशुद्धबुद्धमुक्तसत्यस्वभावपरमानन्दानन्ताद्वयाखण्डब्रह्मास्मीति चित्तवृत्तिरुदयमासादयति । तदानीमेव तस्याभिव्यक्ताखण्डचैतन्यबलेन तत्त्वपरिपीड़िताज्ञाननाशो भवति । तदानीं तत्कार्य्यस्य सर्वस्य नाशादभिव्यक्तिरपि स्वयमेव कतकरजोवत् दारुमथनजनिताग्निवत् उदरस्थदुष्टजलशान्त्यर्थंपीततप्तजलवच्च नष्टा भवति । तदानीं तद्गताभासोऽपि स्वोपाधिभूतवृत्तिनाशात् स्वप्रकाशात्मावभासनासमर्थतया दर्पणविगमे तदुपाधिकस्य स्वाधिष्ठानमुखमात्रत्ववदधिष्ठानमात्रो भवतीति

---

तर्हि वृत्तिप्रतिविम्बितस्य प्रत्यक्चैतन्यस्य का गतिरिति तत्राह, तत्रेति । तत्र प्रतिविम्बितं चैतन्यमपि अखण्डचिद्वृत्तेर्बाधितत्वात् प्रत्यगभिन्नपरब्रह्ममात्रं भवतीत्यन्वयः । स्वोपाधिविलये उपहितस्य स्वस्वरूपमात्रावस्थाने दृष्टान्तो दर्पणाभावे इति ।—उपाध्यनुगामिनो निरुपाधिप्रकाशनासामर्थ्यं दृष्टान्तमाह, यथा दीप-

मुखप्रतिबिम्बस्य मुखमात्रत्ववत् प्रत्यगभिन्नपर-ब्रह्ममात्रं भवति ॥ १५८ ॥

एवञ्च सति "मनसैवानुद्रष्टव्यं," [ वृह० उप०

वेदान्तसिद्धान्तरहस्यमिति। अत्र तस्यानुभवः, "लोकाश्च भान्ति परमे मयि मोहजन्याः स्वप्नेन्द्रजालमरुनीरसमा विचित्राः। व्युत्थानकाल इह न स्फुरत्नं विशुद्धप्रत्यक्सुखाब्धि-परमामृतचित्तवृत्तौ ॥ मत्तः परं न खलु विश्वमथापि भाति मध्ये च पूर्वमपरं नरशृङ्गतुल्यम्। मायोत्थशास्त्रगुरुवाक्यसमुत्थ-बोधभानुप्रभाविलसिते क्व गतं न जाने ॥ निरतिशयसुखाब्धि-स्वप्रकाशे परेऽस्मिन् कथमिदमविवेकादुत्थितं स्रक्फणीव। क्व नु गतमधुना तद्देशिको वा श्रुतिर्वा परमविमलबोधेऽभ्यु-त्थितेऽहं न जाने ॥" इति।

तदेतत्सर्वं मनसि निधायोपसंहरति, प्रत्यगभिन्नेति ॥ १५८ ॥ सु०।

ननु "मनसैवानुद्रष्टव्यं," [ वृह० उप० ४ अध्या० ४ ब्रा० १९ मन्त्रः ] "मनसैवेदमाप्तव्यं" [ कठ० उप० २ अध्या० ४ वल्ली० ११ मन्त्रः ] "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" [ कठ० उप० ३ वल्ली० १२ मन्त्रः ] "बुद्ध्या-लोकनसाध्येऽस्मिन् वस्तुन्यस्तमिता यदि" "बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव" [ गीता० १८ अध्या० ५७ श्लोक० ] इत्यादि श्रुतिस्मृतीनां "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह"

प्रभेति। यद्वा,—परिच्छिन्नप्रकाशस्यापरिच्छिन्नानवभासने दृष्टान्तो यथा दीपेति। वाक्यजनिता ब्रह्मात्माकारा चित्तवृत्तिस्तद्गताज्ञानमेव बाधते, न तु तत्प्रकाशय-तीति ॥ १५९ ॥ विद्व०।

विशेषनिरूपणे फलितमाह, एवञ्च इति। अविरोधः सिद्ध इति शेषः।

४ अध्या० ४ ब्रा० १९ मन्त्रः] "यन्मनसा न मनुते," [केन० उप० १ खण्ड० ५ मन्त्रः] इत्यनयोः श्रुत्योरविरोधः, वृत्तिव्याप्यत्वाङ्गीकारेण फलव्याप्यत्वप्रतिषेधप्रतिपादनात्। उक्तञ्च—"फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम्"

[तैत्ति० उप० २ वल्ली० ९ अनु० १ मन्त्रः] "यन्मनसा न मनुते," [केन० उप० १ खण्ड० ५ मन्त्रः] "अन्यदेव तद्विदितादथो अविदितादधि" [केन० उप० १ खण्ड० ३ मन्त्रः] "अविज्ञातं विजानतां विज्ञातमविजानताम्," [केन० उप० २ खण्ड० ११ मन्त्रः] "अनाशिनोऽप्रमेयस्य" [गीता० २ अध्या० १८ श्लोकः] "यद्विज्ञातं त्वया विप्र! यन्न विज्ञातमात्मना। ताभ्यामन्यत्परं विप्र! यद्वेद्यं विद्धि तज्जड़म्॥" इत्यादिश्रुतिस्मृतीनाञ्च परस्परविरोधमाशङ्क्य परिहरति, एवञ्च सतीति। एवमुक्तप्रकारेण अज्ञातचैतन्यस्य वृत्तिव्याप्यत्वाङ्गीकारेण फलव्याप्यत्वे प्रतिषिद्धे सतीत्यर्थः।

तदेवाह, वृत्तिव्याप्यत्वेति। अन्तःकरणवृत्तिरावरणनिवृत्त्यर्थम् अज्ञानावच्छिन्नं चैतन्यं व्याप्नोतीत्येतद्वृत्तिव्याप्यत्वमङ्गीक्रियते। आवरणभङ्गानन्तरं स्वयं प्रकाशमानं चैतन्यं फलचैतन्यमित्युच्यते; तस्मिन् फलचैतन्ये निष्कलङ्के चित्तवृत्तिर्न व्याप्नोति, आवरणभङ्गस्य प्रागेव जातत्वेन प्रयोजनाभावादित्यर्थः।

अस्मिन्नर्थे ग्रन्थान्तरं संवादयति, उक्तञ्चेत्यादि।

तदेवंशब्दसूचितमर्थं विवृणोति, "वृत्तिव्याप्यत्वा" इति।—विशिष्टशब्दादिप्रमाणबलात् तत्तद्विषयाकारधीससुन्मेषाभिव्यक्तत्वं वृत्तिव्याप्यत्वम्। वाह्येन्द्रियसन्निकृष्टार्थाकारवाह्यधीपरिणामावच्छिन्नचिदंशकृतप्राकट्याश्रयत्वं फलव्याप्यत्वमिति भेदः। उक्तेऽर्थे

[पञ्चदशी ७ परि० ८९ श्लोकस्य उत्तरार्द्धः] इति "ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता । स्वयं स्फुरणरूपत्वान्नाभास उपयुज्यते ॥" इति च [तत्रैव ९१ श्लोकः] ॥ १६० ॥

जड़पदार्थाकाराकारितचित्तवृत्तेर्विशेषोऽस्ति। तथाहि, अयं घट इति घटाकाराकारितचित्त-

---

वृत्तिप्रतिबिम्बितचैतन्याभासस्यापि फलचैतन्यप्रकाशकत्वं नेत्यत्रापि सम्मतिमाह, स्वयम्प्रकाशेति ॥ १६० ॥ सु० ।

इदानीं जड़पदार्थविषयकचित्तवृत्तेर्ब्रह्माकारचित्तवृत्त्यपेक्षया वैलक्षण्यं दर्शयितुमाह, जड़पदार्थेति । अहं ब्रह्मास्मीत्यज्ञानावच्छिन्नब्रह्माकारा वृत्तिस्तदावरकमज्ञानमात्रं निवर्त्तयति, ब्रह्म तु स्वप्रकाशात्मत्वात् स्वयमेव प्रकाशते, न तु वृत्तिप्रतिबिम्बितचिदाभासेन चैतन्यं प्रकाश्यते तत्र तस्यासामर्थ्यात् । अयं घट इति घटाकाराकारितचित्तवृत्तिस्तु घटावच्छिन्नचैतन्यावरकाज्ञानं निवर्त्तयमाना स्वप्रतिबिम्बितचिदाभासेन जड़ं घटमपि प्रकाशयति ; अतस्ततो विशेषोऽस्तीत्यर्थः ।

एतदेव प्रपञ्चयितुं प्रतिजानीते, तथाहीति ।

जड़पदार्थविषयिणीं चित्तवृत्तिमभिनीय दर्शयति, अयमिति । वृत्तिसम्बन्धात् प्राक् घटस्याज्ञातत्वादज्ञातं घटं

---

वृद्धसम्मतिमाह, उक्तञ्चेति । फलव्याप्यत्वाभावं सम्मत्यन्तरेण साधयति, स्वयं स्फुरणेत्यादि ॥ १६० ॥ वि० ।

ननु ब्रह्म फलव्याप्यं साभासान्तःकरणवृत्तिव्यङ्ग्यत्वात्प्रत्यक्षत्वाद्वा घटादिवत्, यद्वा ब्रह्माकारा वृत्तिः सकर्मिकापरोक्षवृत्तित्वात् घटादिवृत्तिवत् इत्याशङ्क्य पूर्वस्मिन्ननुमाने जड़त्वमुपाधिरुत्तरस्मिंस्तु जड़विषयत्वमुपाधिरित्यभिप्रेत्याह, जड़पदार्थेति ।—प्रतिज्ञात-

वृत्तिरज्ञातं घटं विषयीकृत्य तद्गताज्ञाननिरसनपुरःसरं स्वगतचिदाभासेन जड़ं घटमपि भासयति। तदुक्तम्,—"बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम् । तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत् ॥" इति [ पञ्चदशी० ७ परि० ९० श्लोकः ] ॥ १६१ ॥

यथा दीपप्रभामण्डलमन्धकारगतं घटपटादिकं विषयीकृत्य तद्गतान्धकारनिरसनपुरःसरं स्वप्रभया तदवभासयतीति ॥ १६२ ॥

---

विषयीकृत्य प्रवृत्ता चित्तवृत्तिर्घटगताज्ञानं दूरीकुर्वाणा घटमपि भासयति इत्यर्थः ।

अस्मिन्नर्थे वृद्धसम्मतिमाह, तदुक्तमित्यादि । बुद्धिश्च तत्र बुद्धौ प्रतिविम्बितचिदाभासश्च बुद्धितत्स्थचिदाभासौ द्वावेतौ बुद्धिचिदाभासौ घटं व्याप्नुतः। तत्र तयोर्मध्ये धिया वृत्त्या घटाज्ञानं नश्येत्, चिदाभासेन तु घटः स्फुरेदित्यर्थः ॥१६१॥ सु० ।

अत्रानुरूपं दृष्टान्तमाह, यथा दीपेति। यथाऽन्धकारावस्थितं घटादिकं विषयीकृत्य प्रवर्त्तमानं दीपप्रभामण्डलं घटावरकान्धकारनिवृत्तिद्वारा स्वप्रभया घटादिकं प्रकाशयति, तद्वदित्यर्थः ॥ १६२ ॥ सु० ।

---

मर्थं सदृष्टान्तमुपपादयति, तथा हीत्यादिना इतिशब्दोऽनुभववाक्यार्थनिरूपणसमाप्त्यर्थः ॥ १६१।१६२ ॥ विद्व० ।

एवम्भूतस्वस्वरूपचैतन्यसाक्षात्कारपर्य्यन्तं श्रवण-मनन-निदिध्यासन-समाध्यनुष्ठानस्यापेक्षितत्वात् तेऽपि प्रदर्श्यन्ते ॥ १६३ ॥

श्रवणं नाम—षड्विधलिङ्गैरशेषवेदान्तानामद्वितीयवस्तुनि तात्पर्य्यावधारणम् ॥ १६४ ॥

---

इयता ग्रन्थजालेन प्रतिपादितस्य प्रत्यगभिन्नपरमानन्दाखण्डचैतन्यस्य साक्षात्कारलक्षणाम् अखण्डाकारान्तःकरणवृत्तिं प्रतिपिपादयिषुः तत्साधनभूतश्रवणादेरवश्यानुष्ठेयत्वं तेषां लक्षणानि च क्रमेण दर्शयति, एवम्भूतेत्यादिना अद्वैतं वस्तु भासते इत्यन्तेन ।

एवम्भूतस्य उक्तश्रुतियुक्त्यनुभवैर्निरस्तसमस्तोपाधिप्रत्यगभिन्नपरमानन्दचिद्रूपस्य साक्षात्कारपर्य्यन्तं श्रवणादीनि अनुष्ठेयानीति प्रतिजानीते, तेऽपि इति ।—श्रवणादयोऽपि इत्यर्थः ॥ १६३ ॥ सु० ।

तत्र श्रवणस्य लक्षणमाह, षड्विधेति । लिङ्गम् अर्थं गमय-

---

इदानीम् "आवृत्तिरसकृदुपदेशात्" [ ब्रह्म० सू० ४ अध्या० १ पा० १ सूत्रम् ] इति न्यायमाश्रित्यैवंविधसाक्षात्काररूपानुभवदार्ढ्यपर्य्यन्तमनुष्ठेयं श्रवणादिसाधनजातं निरूपयितुमारभते, एवं इत्यादिना । तथा च श्रुतिः "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनिः" [ वृह० उप० ३ अध्या० ५ ब्रा० १ मन्त्रः ] इति पाण्डित्यबाल्यमुनिशब्दैः क्रमेण श्रवणमनननिदिध्यासनानि विधत्ते । तथा "तस्याभिध्यानाद्योजनात् तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः" [ श्वेता० उप० १ अध्या० १० मन्त्रः ] इति । श्वेताश्वतरीयो मन्त्रः समाधिमनुष्ठेयं सूचयति ।—"सहकार्य्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्" ब्रह्म० सू० ३ अध्या० ४ पा० ४७ सूत्रम् ] इति न्यायेनायमर्थो निर्णीतः ॥ १६३ ॥ विद्व० ।

श्रवणादीनां लक्षणमाह, श्रवणं नाम इत्यादिना । "गतिसामान्यात्" [ ब्रह्म०

लिङ्गानि तु—उपक्रमोपसंहाराभ्यासापूर्वता-फलार्थवादोपपत्त्याख्यानि ।

तत्र प्रकरणप्रतिपाद्यस्यार्थस्य तदाद्यन्तयोरुपपादनम्,—उपक्रमोपसंहारौ । यथा छान्दोग्ये षष्ठे अध्याये प्रकरणप्रतिपाद्यस्य अद्वितीयवस्तुनः "एकमेवाद्वितीयम्" [छान्दो० ६ अध्या० २ खण्ड० १ मन्त्रः] इत्यादौ "ऐतदात्म्यमिदं सर्व्वम्" [छान्दो० ६ अध्या० ८ खण्ड० ७ मन्त्रः] इत्यन्ते च प्रतिपादनम् ।

---

तीति लिङ्गशब्दस्य व्युत्पत्तेः ब्रह्मात्मैकत्वनिश्चायकैरुपक्रमोपसंहारादिषड्विधलिङ्गैः सर्वेषां वेदान्तवाक्यानामद्वितीये ब्रह्मणि तात्पर्य्यनिश्चयः श्रवणमित्यर्थः ॥ १६४ ॥ सु० ।

तानि च लिङ्गानि क्रमेण उपदिशति, उपक्रमेति ।—तथा चोक्तम्,—"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्य्यनिर्णये ॥" इति [सर्वदर्शनसंग्रहः] । उपक्रमोपसंहारौ तावत् दर्शयति, प्रकरणप्रतिपाद्यस्येति । तदुदाहृत्य दर्शयति, यथेति । "एकमेवाद्वितीयम्" इत्युपक्रम्य "ऐतदात्म्यमिदं सर्व्वम्" इति प्रतिपादनम् उपक्रमोपसंहारा-

---

सू० १ अध्या० १ पा० १० सूत्रम्] इति न्यायमाश्रित्य अशेषवेदान्तानामित्युक्तम्; "न स्थानतोऽपि परस्योभयलिङ्गं सर्व्वत्र हि" [ब्रह्म० सू० ३ अध्या० २ पा० ११ सूत्रम्] इति न्यायमाश्रित्य अद्वितीयवस्तुनीत्युक्तम् ॥ १६४ ॥ विद्व० ।

लिङ्गानि कानि? इत्यपेक्षायां तानि विभजते, लिङ्गानि तु इति ।—उपक्रमोपसंहाराख्यमाद्यं लिङ्गं लक्षयित्वोदाहरति, यथा छान्दोग्य इति । पुनःपुनरित्यस्य

प्रकरणप्रतिपाद्यस्य वस्तुनः तन्मध्ये पौनःपुन्येन प्रतिपादनम्—अभ्यासः। यथा तत्रैवाद्वितीयवस्तुनो मध्ये तत्त्वमसीति नवकृत्वः प्रतिपादनम्।

प्रकरणप्रतिपाद्यस्याद्वितीयवस्तुनः प्रमाणान्तरेणाविषयीकरणम्—अपूर्व्वता। यथा तत्रैवाद्वितीयवस्तुनो मानान्तराविषयीकरणम्।

फलन्तु—प्रकरणप्रतिपाद्यस्यात्मज्ञानस्य तदनुष्ठानस्य वा तत्र तत्र श्रूयमाणं प्रयोजनम्। यथा तत्रैव—"आचार्य्यवान् पुरुषो वेद तस्य तावदेव

---

वित्यर्थः। अभ्यासस्य लक्षणमाह, पौनःपुन्येनेति। अत्रापि श्रुतिमुदाहरति, यथेति। अपूर्व्वत्वस्य लक्षणमाह, प्रकरणेति। "तं त्वौपनिषदं पुरुषं पृच्छामि" [बृह० उप० ३ अध्या० ९ ब्रा० २६ मन्त्रः] इत्यादिश्रुतिभिरुपनिषन्मात्रवेद्यत्वप्रतिपादनात् ब्रह्मणोऽपूर्व्वत्वमित्यर्थः; अथवा ब्रह्मस्वप्रकाशत्वेन स्वव्यवहारिस्वातिरिक्तप्रमाणानपेक्षत्वात् ब्रह्मणोऽपूर्व्वत्वमित्यर्थः। क्रमप्राप्तस्य फलस्य लक्षणमाह, फलं त्विति। अत्रानुरूपमुदाहरणमाह, आचार्य्यवानिति। श्रवणादिसाधनानां ब्रह्मात्मैकत्वविज्ञानं प्रयोजनं, ब्रह्मज्ञानस्य तु तत्-

---

भावः पौनःपुन्यम्। तत्रैव छान्दोग्ये षष्ठे मानान्तराविषयीकरणम् "आचार्य्यवान् पुरुषो वेद" [छान्दो० उप० ६ अध्या० १४ खण्ड० २ मन्त्रः] इति सूचितमिति शेषः। तदनुष्ठानस्य चेति सगुणविद्याऽभिप्रायेणोक्तम्। आचार्य्यवान् पुरुषो वेदेति साङ्गचर्य्यादिहोदाहृतं, न पुनः फलवचनं तत्। तस्य तावदिति तु फलवचनमिहोदा-

चिरं यावन्न विमोच्येऽथ सम्पत्स्ये" [छान्दो० ६ अध्या० १४ खण्ड० २ मन्त्रः] इति अद्वितीयवस्तुज्ञानस्य तत्प्राप्तिः प्रयोजनं श्रूयते।

प्रकरणप्रतिपाद्यस्य तत्र तत्र प्रशंसनम्—अर्थवादः। यथा तत्रैव—"उत तमादेशमप्राक्ष्यः। येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" [छान्दो० ६ अध्या० १ खण्ड० २।३मन्त्रौ] इत्यद्वितीयवस्तुप्रशंसनम्।

प्रकरणप्रतिपाद्यार्थसाधने तत्र तत्र श्रूयमाणा युक्तिः,—उपपत्तिः। यथा तत्र—"यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं

---

प्राप्तिः फलं, "ब्रह्म वेद ब्रह्मैव भवति" [मुण्ड० ३ मुण्ड० २ खण्ड० ९ मन्त्रः] तरति शोकमात्मवित्" [छान्दो० ७ अध्या० १ खण्ड० ३ मन्त्रः] इत्यादिश्रुतेः इत्यर्थः। पञ्चमलिङ्गस्यार्थवादस्य लक्षणमाह, प्रशंसनमिति। प्रकरणप्रतिपाद्याद्वितीयब्रह्मस्वरूपस्तावकवाक्यमर्थवाद इत्यर्थः। अत्रापि श्रुतिमाह, "उत तमादेशम्" इत्यादि। "येनाश्रुतं श्रुतं भवति" इति।—येन सकलप्रपञ्चाधिष्ठानब्रह्मस्वरूपश्रवणेन अश्रुतं प्रपञ्चजातमपि श्रुतं भवति, येन ब्रह्मज्ञानेन अज्ञातं सर्वं जगत् ज्ञातं भवति, येन ब्रह्मसाक्षात्कारेण साक्षात्कृतं भवति ब्रह्मणः सर्वतः संप्लुतोदकस्थानीयत्वादित्यर्थः।

अवशिष्टाया उपपत्तेर्लक्षणमाह, युक्तिरिति। तामुदा-

---

हरणमिति द्रष्टव्यम्। उदाहरणान्तरं स्पष्टार्थम्। तथा च न्यायो वाचारम्भण-

विकारो नामधेयं मृत्तिकेत्येव सत्यम्" [ छान्दो० ६ अध्या० १ खण्ड० ४ मन्त्रः ] इत्यादौ अद्वितीयवस्तुसाधने विकारस्य वाचारम्भणमात्रत्वे युक्तिः श्रूयते ॥ १६५ ॥

हरति, यथा तत्रेति। मृद्विकारेषु घटादिषु विकारनामधेययोः वाचारम्भणमात्रत्वेन यथा मृत्त्वमेव अवशिष्यते नान्यत्, तथा चिद्विवर्त्तस्य प्रपञ्चस्य गिरिणदीसमुद्रात्मकविकारनामधेययोर्वाचारम्भणमात्रत्वात् चिन्मात्रमेव अवशिष्यते, रज्जुविवर्त्तस्य सर्पस्य रज्जुमात्रत्वावशेषवदित्यर्थः ॥ १६५ ॥ सु०।

श्रुतेरुपपत्तिपरत्वनिर्णयपरः "तदनन्यत्वमारम्भणशब्दादिभ्यः" [ ब्रह्म० सू० २ अध्या० १ पा० १४ सूत्रम् ] इति।

एवं शाखान्तरेष्वप्युपक्रमोपसंहारादि निरूपणीयम्। तथा हि बृहदारण्यके तावत्।—"आत्मेत्येवोपासीतात्र ह्येते सर्व्वे एकं भवन्ति" [ बृह० उप० १ अध्या० ४ ब्रा० ७ मन्त्रः ] इत्युपक्रमः। "पूर्णमदः" [ बृह० उप० ५ अध्या० १ ब्रा० १ मन्त्रः ] इत्युपसंहारः। "स एष नेति नेत्यात्मा" [ बृह० उप० ३ अध्या० ९ ब्रा० २६ मन्त्रः ] इत्यभ्यासः। "तं त्वौपनिषदं पुरुषं पृच्छामि" [ बृह० उप० ३ अध्या० ९ ब्रा० २६ मन्त्रः ] इत्यपूर्व्वत्वं सूचितम्। "अभयं वै जनक! प्राप्तोऽसि" [ बृह० उप० ४ अध्या० २ ब्रा० ४ मन्त्रः ] "ब्रह्मैव सन् ब्रह्माप्येति" [ बृह० उप० ४ अध्या० ४ ब्रा० ६ मन्त्रः ] इत्यादि फलम्। "तद्यो यो देवानां" [ बृह० उप० १ अध्या० ४ ब्रा० १० मन्त्रः ] इत्याद्यर्थवादः। "स यथा दुन्दुभेः" [ बृह० उप० २ अध्या० ४ ब्रा० ७ मन्त्रः ] इत्याद्युपपत्तिः।

तथा तैत्तिरीयके।—"ब्रह्मविदाप्नोति परं" [ तैत्ति० उप० २ वल्ली० १ अनु० ] इत्युपक्रमः। "आनन्दो ब्रह्मेति व्यजनात्" [ तैत्ति० उप० ३ वल्ली० ६ अनु० ] इत्युपसंहारः। "स यश्चायं" [ तैत्ति० उप० २ वल्ली० ८ अनु० ] इत्यभ्यासः। "यो वेद निहितं गुहायां" [ तैत्ति० उप० २ वल्ली १ अनु० ] इत्यपूर्व्वतासूचनम्। "अभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति" [ तैत्ति० उप० २ वल्ली० ७ अनु० ] इति फलश्रुतिः। "सोऽकामयत" [ तैत्ति० उप० २ वल्ली० ६ अनु० ] इत्याद्यर्थवादः।

मननन्तु—श्रुतस्य अद्वितीयवस्तुनो वेदान्तार्थानुगुणयुक्तिभिः अनवरतमनुचिन्तनम् ॥ १६६ ॥

श्रवणनिरूपणानन्तरं तदुत्तराङ्गस्य मननस्य लक्षणमाह, मननन्त्विति। षड्‌विधलिङ्गतात्पर्य्यपूर्वकं श्रुतस्य अद्वितीयब्रह्मणो वेदान्ताविरोधिनीभिर्युक्तिभिर्नैरन्तर्य्येण अनुचिन्तनं मननमित्यर्थः ॥ १६६ ॥ सु०।

"असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुः" [ तैत्ति० उप० २ वल्ली० ६ अनु० ] इति "को ह्येवान्यात्कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्" [ तैत्ति० उप० २ वल्ली० ७ अनु० ] इत्युपपत्तिः।

तथा मुण्डके च।—"अथ परा यया तदक्षरमधिगम्यते" [ मुण्ड० १ मुण्ड० १ खण्ड० ५ मन्त्रः ] इत्युपक्रमः। "ब्रह्मैवेदममृतं पुरस्तात्" [ मुण्ड० २ मुण्ड० २ खण्ड० ११ मन्त्रः ] इत्युपसंहारः। "येनाक्षरं पुरुषं वेद सत्यं" [ मुण्ड० १ मुण्ड० २ खण्ड० १३ मन्त्रः ] "तदेतदक्षरं ब्रह्म" [ मुण्ड० २ मुण्ड २ खण्ड० २ मन्त्रः ] "तमेवैकं जानथ आत्मानं" [ मुण्ड० २ मुण्ड० २ खण्ड० ५ मन्त्रः ] इत्याद्यभ्यासः। "न चक्षुषा गृह्यते नापि वाचा" [ मुण्ड० ३ मुण्ड० १ खण्ड० ८ मन्त्रः ] इत्यारभ्य "वेदान्तविज्ञानसुनिश्चितार्थाः" [ मुण्ड० ३ मुण्ड० २ खण्ड० ६ मन्त्रः ] इत्यन्तेनापूर्व्वतासूचनम्। "निरञ्जनः परमं साम्यमुपैति" [ मुण्ड० ३ मुण्ड० १ खण्ड० ३ मन्त्रः ] "ब्रह्म वेद ब्रह्मैव भवति" [ मुण्ड० ३ मुण्ड० २ खण्ड० ९ मन्त्रः ] इति फलश्रुतिः। "यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः" [ मुण्ड० २ मुण्ड० १ खण्ड० १ मन्त्रः ] इत्याद्यर्थवादः। "कस्मिन्नु भगवो विज्ञाते सर्व्वमिदं विज्ञातं भवति" [ मुण्ड० १ मुण्ड० १ खण्ड० ३ मन्त्रः ] इत्येकविज्ञानेन सर्व्वविज्ञानप्रतिज्ञारूपा ह्युपपत्तिः। एवमैतरेयादिष्वपि शाखान्तरेषूपक्रमाद्यूहनीयम् ॥ १६५ ॥ विद्व०।

मननं लक्षयति, मननं त्विति।—केवलं पुरुषबुद्ध्युत्प्रेक्षितशुष्कतर्कव्यावृत्त्यर्थं "वेदान्तानुगुण" इतिविशेषणम्। "आर्षं धर्म्मोपदेशञ्च वेदशास्त्राऽविरोधिना। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" ॥ [ मनु० १२ अध्या० १०६ श्लोकः ] इतिस्मृतेः। अत्र धर्म्मशब्दो ब्रह्मणोऽप्युपलक्षणार्थः। अनवरतपदं मननस्यावश्यकत्वद्योतनार्थम् ॥ १६६ ॥ विद्व०।

विजातीयदेहादिप्रत्ययरहिताद्वितीयवस्तुसजातीयप्रत्ययप्रवाहः,—निदिध्यासनम् ॥ १६७ ॥

समाधिस्तु द्विविधः,—सविकल्पको निर्विकल्पकश्चेति ॥ १६८ ॥

तत्र सविकल्पको नाम—ज्ञातृज्ञानादि-

---

निदिध्यासनलक्षणमाह, विजातीयेति।—विजातीयदेहादिबुद्ध्यन्तजड़पदार्थविषयकप्रत्ययनिराकरणेन सजातीयाद्वितीयवस्तुविषयकप्रत्ययप्रवाहीकरणं निदिध्यासनमित्यर्थः॥ १६७॥ सु०।

व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावे सति चित्तस्यैकाग्रतापरिणामः समाधिः। स च द्विविध इत्याह,—सविकल्पको निर्विकल्पकश्च॥ १६८॥ सु०।

आद्यस्य लक्षणमाह, तत्रेति। तत्र तयोः सविकल्पकनिर्विकल्पकयोर्मध्ये सविकल्पकोऽपि द्विविधः। अहं ब्रह्मास्मीति शब्दानुविद्धतया अद्वितीये वस्तुनि चित्तवृत्तेः अवस्थानमित्येकः। द्वितीयस्तु ज्ञातृज्ञानज्ञेयत्रिपुटीलयानपेक्षया अहं ब्रह्मास्मीति शब्दानुविद्धतया अद्वितीये वस्तुनि अविच्छेदेन चित्तवृत्तेः अवस्थानमित्यर्थः।

ननु "भक्षितेऽपि लशुने न शान्तो व्याधिः" इति न्यायेन उक्त-

---

निदिध्यासनलक्षणमाह, विजातीय इति॥ १६७॥ विद्व०।

चित्तस्य ज्ञेयात्मना निश्चलावस्थानं समाधिः तं विभज्य लक्षयति, समाधिः इत्यादिना।—सविकल्पकः सम्प्रज्ञातसमाधिर्निर्विकल्पकोऽसम्प्रज्ञातसमाधिरिति साम्प्रदायिकी संज्ञा द्रष्टव्या॥ १६८॥ विद्व०।

तत्रेत्युद्दिष्टसमाधिद्वयं सप्तम्यर्थः। ज्ञाता ज्ञानं ज्ञेयं चेति यो विकल्पो विभागोल्लेखः तस्य लयोऽभावस्तदनपेक्षया ज्ञात्रादिविकल्पोल्लेखपूर्व्वकमिति यावत्। "अद्वितीय"

विकल्पत्रयानपेक्षया अद्वितीयवस्तुनि तदाकाराकारितायाश्चित्तवृत्तेरवस्थानम्। तदा मृन्मयगजादिभानेऽपि मृद्भानवत् द्वैतभानेऽप्यद्वैतं वस्तु भासते। तदुक्तमभिनीय,—"दृशिस्वरूपं गगनोपमं

---

सविकल्पकसमाध्योः सकलभेदनिराकरणाय प्रवर्त्तनात् तयोरपि ज्ञात्रादिभेदविषयकत्वान्नाद्वैतवस्तुमात्रभानं तत्र इत्याशङ्क्योत्तरमाह, तदेति।—तदा सविकल्पकसमाध्यनुभवकाले ज्ञात्रादिभेदप्रतीतावपि अद्वैतं वस्तु भासत एव। सुवर्णमयकुण्डलादिभाने सुवर्णभानवत् मृन्मयगजादिभाने मृद्भानवच्च गजादिभानस्य वाचारम्भणमात्रत्ववत् ज्ञात्रादिभानस्यापि वाचारम्भणमात्रत्वात् अद्वैतमेव वस्तु भासते इत्यर्थः। यद्वा "सर्वं खल्विदं ब्रह्म" [ छान्दो० उप० ३ अध्या० १४ खण्ड० १ मन्त्रः ] "ऐतदात्म्यमिदं सर्वम्" [ छान्दो० ६ अध्या० ८ खण्ड० ७ मन्त्रः ] इत्यादिश्रुतिबलात् सर्व्वमहमिति गिरिणदीसमुद्रात्मकं सर्व्वं जगत् स्वाभिन्नसच्चिदानन्दब्रह्मत्वेन अनुभूय तस्य दग्धपटन्यायेन प्रपञ्चभानेऽप्यद्वैतं सच्चिदानन्दलक्षणं वस्तु भासते एव इत्यर्थः। तदुक्तं भगवता,—"वासुदेवः सर्वमिति स महात्मा सुदुर्लभः" इति [ भगवद्गीता ७ अध्या० १९ श्लोकः ]।

मूलकारोऽपि अस्मिन्नर्थे ग्रन्थान्तरसम्मतिं दर्शयति, तदुक्तमिति। ओमिति यत्परं ब्रह्म तदेवाहमित्यन्वयः।

---

इतिच्छेदः। सविकल्पकसमाधिलक्षणार्थमुदाहरणेन प्रत्याययति, तदा मृदिति।—यथा मृद्विकारे गजे कुम्भकारादिनिर्मिते गजोऽयमित्यस्यां बुद्धौ गजाकारोल्लेखेऽपि मृन्मात्रमेव सत्यं भासते गजाकारस्य मिथ्यात्वनिश्चयात् एवं ब्रह्माकारायां वृत्तौ ज्ञात्राद्याकारे उल्लिख्यमानेऽपि ब्रह्मैव सत्यं भासते, न ज्ञात्रादिविकल्प इत्यर्थः।

कथं तत्र ब्रह्म भासत इत्यपेक्षायां पूर्वाचार्य्यसम्मत्युदाहरणेन तत्स्वरूपमाह,

परं सकृद्विभातं त्वजमेकमक्षरम्। अलेपकं सर्वगतं

किं तदित्याह, दृगिस्वरूपमिति।—दृगिर्दृष्टिस्तस्या रूपं द्रष्टृत्वं तद् यस्य परमात्मस्वरूपस्य तत् दृगिस्वरूपं, साक्षिस्वरूपमित्यर्थः। तदुक्तं भगवता,—"उपद्रष्टानुमन्ता च भर्त्ता भोक्ता महेश्वरः। परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः॥" इति [ भगवद्गीता १३ अध्या० २२ श्लोकः ]। पुनः किं स्वरूपं तत्? गगनोपमं,—गगनम् उपमा दृष्टान्तो यस्य तद् गगनोपमं, गगनवन्निर्लेपस्वरूपमित्यर्थः। तथा च भगवद्वचनं,—"यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते। सर्व्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते॥" इति [ भगवद्गीता १३ अध्या० ३२ श्लोकः ]; यद्वा,—गगनोपमं गगनवदमूर्त्तस्वरूपमित्यर्थः। "आकाशशरीरं ब्रह्म" [ तैत्ति० १ वल्ली ६ अनु० २मन्त्रः ] इति श्रुतिः। पुनः किम्भूतम्? सकृद्विभातं—सकृदेकदैव विभातं सर्व्वदैकस्वरूपेण भासमानं, चन्द्रादिप्रकाशवत् न वृद्धिक्षयशीलमित्यर्थः। पुनः किम्भूतम्? अजं—जन्मरहितम्। एकं—निरस्तसमस्तोपाधिभेदम्। अक्षरं—विनाशधर्म्मराहित्येन

---

तदुक्तमभिनीय इति।—अभिनयमङ्गचेष्टाविशेषं कृत्वेत्यर्थः। दृगिस्वरूपं—चैतन्यघनं "विज्ञानघन एव" [ बृह० उप० २ अध्या० ४ ब्रा० १२ मन्त्रः ] इत्यादिश्रुतेः। गगनोपमं—सर्व्वगतम् "आकाशवत्सर्व्वगतश्च" [ छान्दो० उप० ६ अध्या० ३ खण्ड० २य मन्त्रभाष्ये काठकस्योल्लेखः ] इतिश्रुतेः। परं—मायाऽतीतं "अक्षरात् परतः परः" [ मुण्ड० २ मुण्ड० १ खण्ड० २ मन्त्रः ] इत्यादिश्रुतेः। सकृद्विभातम्—एकदैव कृत्स्नमभिव्यक्तं "सकृद्दिवा हैवास्मै भवति" [ छान्दो० ३ अध्या० ११ खण्ड० ३ मन्त्रः ] इत्यादिश्रुतेः। तुशब्दः पादपूरणार्थः। अजं—जन्मादिविकारशून्यं "न जायते म्रियते वा विपश्चित्" [ कठ० उप० १ अध्या० २ वल्ली० १८ मन्त्रः ] इत्यादिश्रुतेः। एकं—सजातीयविजातीयशून्यं "एको देवः" [ श्वेता० उप० ६ अध्या० ११ मन्त्रः ] "एकं सन्तं बहुधा कल्पयन्ति" [ ऋग्वेद० ] इतिश्रुतेः। अक्षरं—कूटस्थं नित्यं "येनाक्षरं पुरुषं वेद सत्यं" [ मुण्ड० १ मुण्ड० २ खण्ड० १३ मन्त्रः ] इति श्रुतेः।

यदद्वयं तदेव चाहं सततं विमुक्तः ॥ ओम् ॥"
"दृशिस्तु शुद्धोऽहमविक्रियात्मको न मेऽस्ति कश्चिद्विषयः स्वभावतः।" इत्यादि [ उपदेशसाहस्री० १० प्रक० १ श्लोकः २ श्लोकस्य च पूर्वार्द्धः ] ॥ १६९ ॥

---

कूटस्थस्वरूपमित्यर्थः। तथा च भगवानाह,—"क्षरः सर्व्वाणि भूतानि कूटस्थोऽक्षर उच्यते" [ भगवद्गीता १५ अध्या० १६ श्लोकः ] इति। अलेपकम्—असङ्गत्वादविद्यादिदोषरहितमित्यर्थः। "असङ्गो ह्ययं पुरुषः" [ वृह० उप० ४ अध्या० ३ ब्रा० १५ मन्त्रः ] इति श्रुतेः। सर्व्वगतं—सर्व्वत्र ब्रह्मादिस्थावरान्तेषु भूतेषु गतं व्याप्तम्। अद्वयं—स्वजातीयविजातीयस्वगतभेदराहित्येन द्वितीयरहितम्! सततं विमुक्तमिति—सर्व्वदा कार्य्यकारणात्मकसर्वोपाधिविनिर्मुक्तत्वेन सन्ततैकरूपमित्यर्थः। तथा च श्रीमद्भागवते—"बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः [ ११ स्कन्ध० ११ अध्या० १ श्लोकः ] इति; तथा च एतादृशं निरतिशयानन्दं यत्परं ब्रह्म तदेवाहमिति भावयतो निषेधप्रतियोगित्वेन तत्तदुपाधिभानात् तत्प्रयुक्तभेदभानेऽप्यद्वैतं भासत एवेत्यर्थः ॥ १६९ ॥ सु०।

---

अलेपकं "निरवद्यं निरञ्जनं" [ श्वेता० उप० ६ अध्या० १९ मन्त्रः ] इतिश्रुतेः। सर्व्वगतं—सर्वानुस्यूतं सन्मात्रं "यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं" [ मुण्ड० २ मुण्ड० २ खण्ड० ५ मन्त्रः ] इत्यादिश्रुतेः। यदद्वयं—स्वगतभेदशून्यं "अशब्दमस्पर्शमरूपं" [ कठ० उप० १ अध्या० ३ वल्ली० १५ मन्त्रः ] इत्यादिश्रुतेः। तदेव चाहमस्मि "अहं ब्रह्मास्मि" [ वृह० उप० १ अध्या० ४ ब्रा० १० मन्त्रः ] इतिश्रुतेः। अतोऽहं सततं—सर्व्वदैव, विमुक्तः,—न कदापि बद्धः, "विमुक्तश्च विमुच्यते" [ कठ० उप० २ अध्या० ५ वल्ली० १ मन्त्रः ] इति श्रुतेरिति श्लोकार्थः ॥ १६९ ॥ विद्व०।

निर्विकल्पकस्तु—ज्ञातृज्ञानादिविकल्पलयापेक्षया अद्वितीयवस्तुनि तदाकाराकारिताया-श्चित्तवृत्तेरतितरामेकीभावेन अवस्थानम्। तदा तु जलाकाराकारितलवणानवभासेन जलमात्रावभासवदद्वितीयवस्त्वाकाराकारित-चित्तवृत्त्यनवभासेन अद्वितीयवस्तुमात्रमेव अवभासते। ततश्चास्य सुषुप्तेश्च अभेदशङ्का न भवति। उभयत्र

---

निर्विकल्पकसमाधिस्वरूपमाह, निर्विकल्पकस्त्विति। अयञ्च द्विविधः, चिरकालाभ्यस्तयदुत्तरसविकल्पकसमाध्यनुभवजनितसंस्कारसहकृततायाश्चित्तवृत्तेर्ज्ञात्रादित्रिपुटीलयपूर्वकमद्वैते वस्तुनि एकत्रीभावावस्थानात्मकः प्रथमः। एतन्निर्विकल्पकसमाध्यभ्यासपाटवेन लुप्तसंस्कारतया ज्ञात्रादित्रिपुटीलयपूर्व्वकमखण्डाकाराकारितायाश्चित्तवृत्तेर्विनापि स्वस्फूर्त्तिं केवलचिदानन्दात्मनावस्थानात्मको द्वितीयः।

तत्र द्वितीयं पक्षमभिप्रेत्याह, ज्ञातृज्ञानादीति।

ननु एवं समाधिसुषुप्त्योर्विक्षेपाभावेन वृत्त्यभानादभेदमाशङ्क्य परिहरति, ततश्चेति।

तत्र युक्तिमाह, उभयत्रेति।—समाधिसुषुप्त्योरित्यर्थः।

---

निर्विकल्पकसमाधिं लक्षयति, निर्विकल्पकस्तु इति। अत्राप्यद्वितीयेति च्छेदः। अतितरामेकीभावेनावस्थाने दृष्टान्तः, तदा जलेति। दृष्टान्तदर्शितमर्थं दार्ष्टान्तिके योजयति, अद्वितीयेति। ननु सुषुप्तावपि ज्ञातृज्ञेयज्ञानविभागानां लयसम्भवात् तत्र निर्विकल्पकसमाधिलक्षणमतिव्याप्नोतीत्यत आह, ततश्चेति। तत्र हेतुमाह, उभयत्रेति। सुषुप्तौ बुद्धिरेव नास्ति, बुद्धेः कारणात्मनावस्थानस्य तल्लक्षणत्वात्। इह तु बुद्धिवृत्तेरद्वितीयवस्त्वाकाराकारितायाः अवस्थानाङ्गीकारात्सुषुप्तेर्भेदोपपत्ते-

वृत्त्यभाने समानेऽपि तत्सद्भावासद्भावमात्रेण अनयोर्भेदोपपत्तेः ॥ १७० ॥

अस्याङ्गानि—यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयः ॥ १७१ ॥

तत्र अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहाः,—यमाः ॥ १७२ ॥

---

तत्सद्भावेति।—समाधावज्ञायमानवृत्तिसद्भावात् सुषुप्तौ वृत्त्यभावाच्च तयोर्भेदोपपत्तेरित्यर्थः ॥ १७० ॥ सु०।

उक्तसमाधेः साधनापेक्षायामाह, अस्याङ्गानीति।

तानि च साधनानि क्रमेण उद्दिशति, यमेति।—यमाद्यष्टाङ्गानि समाधेरन्तरङ्गसाधनानि इत्यर्थः ॥ १७१ ॥ सु०।

प्रथमं यमस्य लक्षणमाह, तत्रेत्यादि। तेषु यमाद्यष्टाङ्गेषु मध्ये अहिंसादयः पञ्च यमा अवश्यानुष्ठेया इत्यर्थः ॥ १७२ ॥ सु०।

---

रित्यर्थः। नापि मुक्तावतिव्याप्तिस्तत्राविद्यातत्कार्य्यसंस्काराणामत्यन्तमुच्छेदात्, इह पुनर्व्युत्थानादिव्यवहारदर्शनेन तेषामनुवृत्तेरिष्टत्वात्। नापि जीवन्मुक्तौ प्रसङ्गः, तस्य व्युत्थानदशायामपि वाधितानुवृत्तिमात्रप्रपञ्चावभासेऽपि स्वस्वरूप एवावस्थानात् साधकस्य वाधितानुवृत्तिमात्रप्रपञ्चावभासाभावादिति द्रष्टव्यम् ॥ १७० ॥ विद्व०।

उक्तनिर्विकल्पकसमाधिस्वरूपोपकारकाण्यङ्गान्याह, अस्य इति ॥ १७१ ॥ विद्व०।

तत्र यमानाह, तत्रेति। वाङ्मनःकायैः परपीडावर्जनम्—अहिंसा। सत्यं—यथार्थभाषणम्। अस्तेयम्—अदत्तादानरूपपरस्वहरणराहित्यम्। ब्रह्मचर्य्यम्—अष्टाङ्गमैथुनवर्जनम्। तथा चोक्तं,—"स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम्। सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च॥ एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः। विपरीतं ब्रह्मचर्य्यमेतदेवाष्टलक्षणम् ॥" इति [ दक्षसंहिता ७ अध्या० ] अपरिग्रहः,—समाध्यनुष्ठानानुपयुक्तस्य वस्तुमात्रस्यासङ्ग्रहः ॥ १७२ ॥ विद्व०।

शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि—नियमाः ॥ १७३ ॥

करचरणादिसंस्थानविशेषलक्षणानि पद्म-स्वस्तिकादीनि—आसनानि ॥ १७४ ॥

रेचकपूरककुम्भकलक्षणाः प्राणनिग्रहोपायाः,—प्राणायामाः ॥ १७५ ॥

---

तदनन्तरं नियमानाह, शौचेत्यादि। शौचादयः पञ्च नियमा इत्यर्थः ॥ १७३ ॥ सु०।

आसनं लक्षयति, करेत्यादि ॥ १७४ ॥ सु०।

प्राणायामलक्षणमाह, रेचकेत्यादि। "इड़या पूरयेद्वायुं

---

नियमानाह, शौचमिति।—शौचं—वाह्याभ्यन्तरलक्षणम्। तदुक्तं,—"शौचन्तु द्विविधं प्रोक्तं वाह्यमाभ्यन्तरं तथा। मृज्जलाभ्यां स्मृतं वाह्यं भावशुद्धिस्तथाऽऽन्तरम् ॥" [ दक्षसंहिता ५ अध्या० ] इति। सन्तोषः,—यदृच्छालाभसन्तुष्टिरलाभे चाविषादः। तपः,—कामानशनं "तपो नानशनात्परम्" [ महा० नार० २१।२ ] इतिश्रुतेः। अनशनञ्च कामानशनमेव। केचित्तु "मनसश्चेन्द्रियाणाञ्च ह्यैकाग्र्यं परमं तपः" [ उपदेशसाहस्री १७ प्रक० २४ श्लोकः पूर्वार्द्धः ] इत्याद्युक्तलक्षणं तप इत्याहुः। सर्व्वथा तु नात्र चान्द्रायणादिः तपःशब्दार्थस्तस्य समाधिविरोधादिति द्रष्टव्यम्। स्वाध्यायः,—प्रणवजप उपनिषद्ग्रन्थावृत्तिश्च "ओमित्येवं ध्यायथ आत्मानम्" [ मुण्ड० २ मुण्ड० २ खण्ड० ६ मन्त्रः ] "उपनिषदमावर्त्तयेत्" [ आरु० उप० २ मन्त्रः ] इति-श्रुतेः। ईश्वरप्रणिधानं—तस्य मानसैरुपचारैरभ्यर्च्चनं "तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" [ श्वेता० उप० ६ अध्या० १८ मन्त्रः ] इतिमन्त्रलिङ्गात् ॥ १७३ ॥ विद्व०।

अथासनादीनि कथयति, कर इति। स्वस्तिकादीनीत्यादिपदाद्भद्रवीरासनादि-ग्रहः ॥ १७४ ॥ विद्व०।

रेचकः,—प्राणवायोः शनैर्वामनासापुटाद्दक्षिणनासापुटाद्वा सव्यापसव्यन्यायेन

मुञ्चेद्दक्षिणयानिलम् । यावच्छ्वासं समासीनः कुम्भयेत् तं सुषुम्णया ॥"

यदा योगी पद्माद्यासने उपविश्य योगमभ्यस्यति तदा गुल्फाभ्यां गुह्यमूल निष्पीड्य खेचरीमुद्रासाहाय्येन प्राणधारणया सुषुम्णामार्गेण मूलाधारात् कुण्डलिनीमुत्थाप्य स्वाधिष्ठान-मणिपूरानाहत-विशुद्धाज्ञानिर्वाणाख्यषट्चक्रभेदक्रमेण सहस्र-दलकमलकर्णिकायां विद्यमानपरमात्मना सह संयोज्य तत्रैव चित्तं निर्वातदीपवदचलं कृत्वा स्वात्मानन्दरसं पिबतीत्येतत्प्राणायामफलम् । स च द्विविधः, अगर्भः सगर्भश्चेति । "मुञ्चेद् दक्षिणया वायुं मात्राहीनमनन्यधीः । पूरयेद्वामया तद्वत् कुम्भयेच्च सुषुम्णया । यावच्छ्वासं जितश्वासो भवेन्मासाज्जितेन्द्रियः ॥"इति । प्रणवोच्चारणराहित्येन उक्तरेचकपूरककुम्भक-क्रमेण प्राणनिरोधोऽगर्भप्राणायामः । "रेचयेत् षोड़शेनैव तद्द्विगुणेन पूरयेत् । कुम्भयेच्च चतुःषष्ट्या प्रणवार्थमनुस्मरन् ॥" इति वचनात् षोड़शसंख्याकं प्रणवं मनसा जपन् दक्षिणया वायुं विरेच्य द्वात्रिंशत्संख्याकं प्रणवं मनसा समुच्चरन् वामया वायुमापूर्य्य चतुःषष्टिसंख्याकं प्रणवं मनसा जपन् तदर्थञ्चाकारोकारमकारार्द्धमात्रात्मकसार्द्धत्रिवलयाकारं कुण्डलिनीरूपं चिदानन्दकन्दञ्च मूलादिब्रह्मरन्ध्रान्तमनुसन्दधत् । सुषुम्णया चित्तमपि तदेकप्रवणं कुर्वन् यावत् श्वासं कुम्भयेत् । तदुक्तमाचार्य्यैः,—"षोड़श तद्द्विगुणचतुःषष्टिमात्राणि च तानि च क्रमशः । रेचकपूरककुम्भकभेदैस्त्रिविधः प्रभञ्जनायामः ॥" इति प्राणायामप्रकारः ॥ १७५ ॥ सु० ।

---

बहिर्निःसारणम् ; पूरकः,—तस्य तथैवान्तःप्रवेशनम् । कुम्भकस्तु—पूरितस्य वायोरन्तरेव निरोध इति भेदः ।

इन्द्रियाणां स्वस्वविषयेभ्यः प्रत्याहरणं,— प्रत्याहारः ॥ १७६ ॥

क्रमप्राप्तं प्रत्याहारं निरूपयति,—इन्द्रियाणामित्यादि।

श्रोत्रादीनामिन्द्रियाणां स्वस्वविषयेभ्यः शब्दादिभ्यः सकाशात् पाषाणोपरिप्रयुक्तः शरसङ्घातस्तद्वत् प्रत्यावर्त्तनं— प्रत्याहारः।

ननु इन्द्रियाणां स्वस्वविषयेभ्यो निवर्त्तनं प्रत्याहार इत्युक्तं, तन्न सम्भवति; शब्दादिविषयाणां सुखसाधनत्वेन वैषयिकसुखव्यतिरिक्तनिरतिशयानन्दसद्भावे प्रामाणाभावात्। हैरण्यगर्भाद्यमृतभोगस्येश्वरेणापि त्यक्तुमशक्यत्वादिति चेन्न, मूढ़ैः कर्मजड़ैर्विषयलम्पटैस्त्यक्तुमशक्यत्वेऽपि शुद्धान्तःकरणेन संसारावित्यकत्वदर्शिना विषयदोषदर्शनेन तुच्छीकृतशब्दादिविषयप्रपञ्चेन पुरुषोत्तमेन त्यक्तुं शक्यत्वात्; अन्यथा संसार एव लोलुप्येत। "तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः" "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" [ वृह० उप० ४ अध्या० ४ ब्रा० २२मन्त्रः]"एतत्सर्वं भूःस्वाहेत्यप्सु परित्यज्य आत्मानमन्विच्छेत्" [ जावा० उप० ६ मन्त्रः] "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः," [ महा० नार० १०।५ ] "ब्रह्मचर्य्यादेव प्रव्रजेत्" [ जावाल० उप० ४ मन्त्रः ] "यदहरेव विरजेत् तदहरेव प्रव्रजेत् वनाद् गृहाद्वा" [ जावाल० उप० ४ मन्त्रः ]। "सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज" [ भगवद्गीता १८ अध्या० ६६ श्लोकः ] "संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया। प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः"॥ [आङ्गिरसः ] "प्रत्यग्विविदिषासिद्धैर वेदानुवचनादयः। ब्रह्मावाप्त्यै श्रुतत्यागमीप्सन्तीति श्रुतेर्बलात्"॥ [ सुरेश्वरकृता वृह० भाष्ये १४ श्लोकव्याख्या ]

अद्वितीयवस्तुनि अन्तरिन्द्रियधारणं,—धारणा ॥ १७७ ॥

तत्र अद्वितीयवस्तुनि विच्छिद्य विच्छिद्य अन्तरिन्द्रियवृत्तिप्रवाहः,—ध्यानम् ॥ १७८ ॥

समाधिस्तु—उक्तः सविकल्पक एव ॥१७९॥

इत्यादिश्रुतिस्मृतिभिः। तथा "आनन्दो ब्रह्मेति व्यजानात्" [ तैत्ति० उप० ३ वल्ली० ६ अनु० १ मन्त्रः ] "एतस्यैवानन्दस्य अन्यानि भूतानि मात्रामुपजीवन्ति" [ वृह० उप० ४ अध्या० ३ब्रा० ३२मन्त्रः] "एषोऽस्य परमानन्दः" [वृह० उप० ४अध्या० ३ ब्रा० ३२ मन्त्रः ] "आत्मैवानन्दः," "यदेष आकाश आनन्दो न स्यात्" [ तैत्ति० उप० २ वल्ली ७ अनु० १ मन्त्रः ] "आनन्दाद्ध्येव खल्विमानि भूतानि" [तैत्ति० उप० ३ वल्ली० ६ अनु० १ मन्त्रः ] इत्यादिश्रुतिभिश्च नित्यात्मसुखस्य प्रतिपादितत्वात् शब्दादिवैषयिकसुखव्यतिरिक्तनिरतिशयानन्दसद्भावे प्रमाणाभावादित्येतदपि निरस्तं बोद्धव्यम् ॥ १७६ ॥ सु० ।

सम्प्रति धारणां लक्षयति, अद्वितीयेत्यादि। सर्वेषां बुद्धिसाक्षितया विद्यमानेऽद्वितीयवस्तुनि चित्तनिक्षेपणं धारणेत्यर्थः ॥ १७७ ॥ सु० ।

धारणापाटवाभावेन चित्तस्थैर्याभावात्। अद्वितीये वस्तुनि विच्छिद्य विच्छिद्य चित्तवृत्तिप्रवाहीकरणं ध्यानमित्याह, तत्राद्वितीयेत्यादि ॥ १७८ ॥ सु० ।

समाधिरुक्त एव सविकल्पकः स्मर्त्तव्य इत्याह, समाधिस्त्विति ॥ १७९ ॥ सु० ।

समाधिध्यानस्य भेदं द्योतयितुं विच्छिद्य विच्छिद्येत्युक्तम्। सुगममन्यत् ॥ १७५—१७९ ॥ विद्व० ।

एवमस्याङ्गिनो निर्विकल्पकस्य लयविक्षेपकषायरसास्वादलक्षणाश्चत्वारो विघ्नाः सम्भवन्ति ॥ १८० ॥

लयस्तावत्—अखण्डवस्त्वनवलम्बनेन चित्तवृत्तेर्निद्रा ॥ १८१ ॥

अखण्डवस्त्वनवलम्बनेन चित्तवृत्तेरन्यावलम्बनं—विक्षेपः ॥ १८२ ॥

---

उक्तयमाद्यष्टाङ्गसहितनिर्विकल्पकसमाधेः निर्विघ्नानुष्ठानसिद्ध्यर्थं विघ्नज्ञानव्यतिरेकेण निराकरणस्य कर्त्तुमशक्यत्वात् अस्य चतुरो विघ्नान् दर्शयति, एवमस्येति ॥ १८० ॥ सु० ।

तत्राद्यं विघ्नं लक्षयति, लयस्तावदिति। लयो द्विविधः, चिरकालमुक्ताष्टाङ्गसहितनिर्विकल्पक-समाध्यभ्यासपाटवेनातितप्तलोहतलक्षिप्तजलबिन्दुवत् तैलरहितदीपकलिकावच्च प्रत्यगभिन्ने परमानन्दे चित्तवृत्तेर्लयः प्रथमः। द्वितीयस्तु मूर्च्छावस्थावत् आलस्येन चित्तवृत्तेर्बाह्यशब्दादिविषयग्रहणानादरे सति प्रत्यगात्मस्वरूपानवभासनात् वृत्तेस्तब्धीभावलक्षणनिद्रारूपः ॥ १८१ ॥ सु० ।

तत्राद्यमङ्गीकृत्य द्वितीयस्य विघ्नत्वेन तत्त्यागाय तत्स्वरूपमाह, अखण्डवस्त्वित्यादि ।

---

एवं साङ्गसमाधिमनुतिष्ठतो यदाऽतिवृष्ट्यनावृष्टिराष्ट्रविप्लवव्याघ्रचौरज्वराद्युपद्रवविघ्नसम्भावना भवति, तदा तन्निवृत्तिर्लौकिकावगतसाधनाऽवलम्बनेन कार्या। यदा तु मनस्येव विघ्नाः प्रादुर्भविष्यन्ति, तदा तन्निवारणोपायमुपदेष्टुकामस्तत्वत्यान् विघ्नान् निर्दिशति, अस्येति ॥ १८० ॥ विद्व० ।

लयादीन् विभज्य लक्षयति, लयस्तावदिति ।

लयविक्षेपाभावेऽपि चित्तवृत्ते रागादिवासनया स्तब्धीभावात् अखण्डवस्त्वनवलम्बनं—कषायः ॥ १८३ ॥

अखण्डवस्त्वनवलम्बनेनापि चित्तवृत्तेः सवि-

---

द्वितीयं विघ्नमाह, अखण्डेत्यादि।—अखण्डवस्तुग्रहणायान्तर्मुखतया प्रवृत्तायाश्चित्तवृत्तेश्चिदनवलम्बनेन त्रस्तपक्षिवत् पुनर्वाह्यविषयग्रहणाय प्रवृत्तिर्विक्षेप इत्यर्थः ॥ १८२ ॥ सु० ।

तृतीयं विघ्नमाह,लयविक्षेपेति। रागादयस्त्रिविधाः,—वाह्याः, आभ्यन्तराः, वासनामात्ररूपाश्चेति । वाह्याः पुत्त्रादिविषयाः । आभ्यन्तराः, मनोराज्यादयः । संस्काररूपा वासनामयाः । तत्र अनेकजन्माभ्यस्तवाह्याभ्यन्तररागाद्यनुभवजनितसंस्कारैः कलुषीकृतं चित्तं कथञ्चित् श्रवणादिसाधनेन अन्तर्मुखमपि चैतन्यग्रहणसामर्थ्याभावात् मध्य एव स्तब्धीभवति। यथा राजदर्शनाय स्वगृहान्निर्गत्य राजमन्दिरं प्रविष्टस्य कस्यचित् पुरुषस्य द्वारपालनिरोधेन स्तब्धीभावः, तथा परित्यक्तवाह्यविषयस्य अखण्डवस्तुग्रहणाय प्रवृत्तस्य उद्बुद्धरागादिसंस्कारैः स्तब्धीभावादखण्डवस्त्वग्रहणं कषाय इत्यर्थः ॥ १८३ ॥ सु० ।

चतुर्थं विघ्नमाह, अखण्डेति।—उक्तसविकल्पकसमाध्योर्मध्ये द्वितीयः शब्दानुविद्धस्त्रिपुटीविशिष्टस्तस्मिन् य आनन्दो वाह्यशब्दादिविषयप्रपञ्चभारत्यागप्रयुक्तः, न तु चैतन्यप्रयुक्तः ; यथा निधिग्रहणाय प्रवृत्तस्य निधिपरिपालकभूतप्रेताद्यावृतस्य निधिप्राप्त्यभावेऽपि भूताद्यनिष्टनिवृत्तिमात्रेण कोऽपि महानानन्दो भवति, तथा सविकल्पकसमाधावखण्डवस्त्वनवलम्बनेन नित्यानन्दरसास्वादनाभावेऽपि अनिष्टवाह्यप्रपञ्चनिवृत्तिजन्या-

कल्पकानन्दास्वादनं—रसास्वादः; समाध्यारम्भ-समये सविकल्पकानन्दास्वादनं वा ॥ १८४ ॥

अनेन विघ्नचतुष्टयेन विरहितं चित्तं निर्वात-दीपवदचलं सदखण्डचैतन्यमात्रमवतिष्ठते यदा तदा निर्विकल्पकः समाधिरित्युच्यते। तदुक्तं,—

"लये सम्बोधयेत् चित्तं विक्षिप्तं शमयेत् पुनः।

---

नन्दं सविकल्पकरूपं ब्रह्मानन्दभ्रमेणास्वादयति तद्रसास्वादन-मित्यर्थः।

लक्षणान्तरमाह, समाध्यारम्भेति। निर्विकल्पकसमाध्या-रम्भकाले अनुभूयमानसविकल्पकानन्दत्यागासहिष्णुतया पुन-स्तस्यैवास्वादनं रसास्वाद इत्यर्थः॥ १८४ ॥ सु०।

प्रोक्तविघ्नचतुष्टयनिवृत्तेः फलमाह, अनेन इत्यादि। लयादि-विघ्नाभावसहितं चित्तं यदा निर्वातदीपवदचलमखण्डचैतन्य-मात्रमवतिष्ठते तदा निर्विकल्पकसमाधिरित्यर्थः।

लयादिविघ्नसद्भावे तन्निवृत्तिप्रकारे च वृद्धसम्मतिमाह, तदुक्तमित्यादि। पूर्वोक्तनिद्रालक्षणे लये जाते सति तन्निवृत्त्यर्थं चित्तं सम्बोधयेत्—चित्तगतजाड्यादिपरित्यागेन चित्तमुद्बोध-येत्। उक्तविक्षेपयुक्तं चित्तं यदा भवति, तदा विषयवैराग्यादिना चित्तं शमयेत्—वहिर्मुखतां परित्यज्यान्तर्मुखं कुर्य्यात्। उक्त-

---

उक्तलयादिविघ्नचतुष्टयाभावेन चित्तस्य ज्ञेये वस्तुनि यन्नैश्चल्यं तद्दृष्टान्तेन निर्वि-कल्पकसमाधिलक्षणमित्याह, तदेति। विघ्ननिवृत्त्युपायं सम्मतिप्रदर्शनेनाह, तदुक्त-मित्यादिना। लये सम्बोधयेत् उत्तम्भयेत्, सोत्साहं मनः कुर्य्यादिति यावत्। विक्षिप्तं चित्तं धैर्य्यावलम्बनेन पुनः शमयेत् पुनरद्वितीयवस्तुनिष्ठं कुर्य्यादित्येतत्।

सकषायं विजानीयात् शमप्राप्तं न चालयेत्॥
नास्वादयेद्रसं तत्र निःसङ्गः प्रज्ञया भवेत्।”
इत्यादि। “यथा दीपो निवातस्थो नेङ्गते

रागादिकषायसहितं चित्तं यदा भवेत् तदा विजानीयात् इयं रागादिवासना वाह्यविषयप्रापिका, न त्वखण्डवस्तुप्रापिका, अतो नेयं समीचीनेति विविच्य प्रत्यक्प्रवणवासनायाः सकाशादियं निकृष्टा अतस्त्याज्येयमिति जानीयादित्यर्थः। यद्वा सम्यग्वस्तुनि अप्राप्तं चित्त यदा भवति, तदा तच्चित्तं कषायसहितं जानीयात्। तच्चित्तं यावता कालेन रागादिवासनाक्षयसहितं भवति, तावत्कालं तच्चित्तं स्वस्थानात् न चालयेदिति—न कम्पयेत्। वासनाक्षयानन्तरं चित्तं स्वत एव प्रत्यक्प्रवणं भवतीत्यर्थः। नास्वादयेदिति पूर्वोक्तं सविकल्पकरसं विषयप्रपञ्चभारत्यागजन्यं नास्वादयेत् नानुभवेत्।

तत्र युक्तिमाह, निःसङ्ग इति।—यतो निःसङ्गो वैषयिकसुखदुःखादिसङ्गरहितः अतः प्रज्ञया युक्तो भवेत् स्थितप्रज्ञो भवेदित्यर्थः। तदुक्तं भगवता,—“प्रजहाति यदा कामान् सर्वान् पार्थ! मनोगतान्। आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते॥” [भगवद्गीता २ अध्या० ५५ श्लोकः] इति। तस्माल्लयादिविघ्नाभावविशिष्टचित्तस्य चिन्मात्रतया अवस्थानं निर्विकल्पकसमाधिरित्यर्थः। तत्र भगवदुक्तमाह, यथा दीप इति।

सकषायं चित्तं विजानीयात् कलुषितं मे चित्तमिति विज्ञाय च समेऽद्वितीयचैतन्यात्मनि निवेशयेत्। पुनः शमप्राप्तं तन्न चालयेत्, तत्रैव प्रयत्नपूर्व्वकं स्थिरीकुर्य्यादित्यर्थः। रसं सविकल्पकानन्दं नास्वादयेत्, तदानन्दमात्रेण कृतार्थतां न मन्वीत, किन्तु प्रज्ञया विवेकबुद्ध्या निःसङ्गः सविकल्पकानन्देऽनासक्तो भवेदित्यर्थः। एवं विघ्नपरिहारे सति यन्निर्विकल्पकसमाध्यवस्थानं चित्तस्य तद्भगवद्वाक्योदाहरणेन दर्शयति, यथा दीप इति।

अथ निर्विकल्पकसमाधौ स्वगुरूपदिष्टमार्गेण यथामति किञ्चिद्विचार्य्यते।—पञ्चभूमिकोपेतस्य चित्तस्य भूमिकात्रय-परित्यागेन अवशिष्टभूमिकाद्वयं समाधिरित्युच्यते। कास्ताः पञ्चभूमिकाः?—क्षिप्तं, मूढ़ं, विक्षिप्तम्, एकाग्रं, निरुद्धञ्चेति पञ्च चित्तभूमिकाः। तत्रासुरसम्पल्लोकशास्त्रदेहवासनासु वर्त्त-मानं क्षिप्तमित्युच्यते। निद्रातन्द्रादिग्रस्तं चित्तं मूढ़मित्युच्यते। कादाचित्कध्यानयुक्तं वहिर्गमनशीलमपि उक्तक्षिप्तादिविशिष्टतया विक्षिप्तं चित्तमित्युच्यते। तत्र क्षिप्तमूढ़योः समाधित्वशङ्कैव नास्तीति। विक्षिप्ते तु चेतसि विक्षेपान्तर्गततया दहनान्तर्गत-वीजवच्चित्तस्य सद्य एव विनाशात् तदाऽपि न समाधिः। एका-ग्रतां पतञ्जलिः सूत्रयति,—"शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यै-काग्रतापरिणामः" [ पातञ्जल० ३ पाद० १२ सूत्रम् ] इति। अस्यार्थः,—शान्तः,—अतीतः। उदितः,—वर्त्तमानः। प्रत्ययः,—चित्तवृत्तिः। अतीतप्रत्ययो यं पदार्थं परिगृह्णाति उदितोऽपि तमेव चेत् गृह्णीयात्, तदा तावुभौ तुल्यप्रत्ययौ भवतः। तादृश एव चित्तस्य परिणाम एकाग्रतेत्युच्यते। एकाग्रताऽभि-वृद्धिलक्षणं समाधिं सूत्रयति,—"सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः" [पात० ३ पाद० ११ सूत्रम्] इति। रजोगुणेन चाल्यमानं चित्तं क्रमेण सर्वानर्थान् परिगृह्णाति तस्य रजोगुणस्य निरोधाय क्रियमाणेन प्रयत्नविशेषेण दिने दिने योगिनः सर्वार्थता क्षीयते एकाग्रता च उदेति, तादृशचित्तस्य परिणामः समाधिरित्यर्थः। अस्य समाधेरष्टाङ्गेषु यमनियमा-सनप्राणायामप्रत्याहाराः पञ्च वहिरङ्गानि हिंसादिभ्यो निषि-द्धेभ्यो योगिनं कर्म्मभ्यो यमयन्ति निवर्त्तयन्ति इति अहिंसादयो यमाः। जन्महेतोः काम्यधर्मान्निवर्त्त्य मोक्षहेतौ निष्कामधर्मे नियमयन्ति प्रेरयन्तीति शौचादयो नियमाः। यमनियमयोः

अनुष्ठानवैलक्षण्यं समर्थ्यते।—"यमान् सेवेत सततं न नित्यं नियमान् बुधः। यमान् पतत्यकुर्व्वाणो नियमान् केवलान् भजन्॥" [ मनु० ४ अध्या० २०४ श्लोकः ] इति। बुद्ध्या यमनियमौ समीक्ष्य यमबहुलेषु प्रयत्नेषु बुद्धिमनुसन्दधीत। आसनप्राणायामप्रत्याहाराः व्याख्याताः। ध्यानधारणासमाधित्रयं मनोविषयत्वात् सम्प्रज्ञातसमाधेरन्तरङ्गं, यमादिकन्तु वहिरङ्गम्; तथा च केनापि पुण्येनान्तरङ्गे प्रथमं लब्धे सति वहिरङ्गलाभाय नातिप्रयासः कर्त्तव्यः। यद्यपि पतञ्जलिना भौतिकभूततन्मात्रेन्द्रियाहङ्कारविषयाः सम्प्रज्ञातसमाधयो बहुधा प्रपञ्चिताः, तथापि तेषामन्तर्द्धानाकाशगमनादिसिद्धिहेतुतया मुक्तिहेतुसमाधिविरोधित्वात् न अस्माभिः तत्रादरः क्रियते। तथा चोक्तं वासिष्ठे,—श्रीराम उवाच,—"जीवन्मुक्तशरीराणां कथमात्मविदां वर!। शक्तयो नेह दृश्यन्ते आकाशगमनादिकाः॥" श्रीवसिष्ठ उवाच,—"अनात्मविदमुक्तोऽपि सिद्धिजालानि वाञ्छति। द्रव्यमन्त्रक्रियाकालयुक्त्याप्नोत्येव राघव!॥ नात्मज्ञस्यैव विषय आत्मज्ञो ह्यात्मनात्मदृक्। आत्मनात्मनि सन्तुष्टो नाविद्यामनुधावति॥ ये केचन जगद्भावास्तानविद्यामयान् विदुः। कथं तेषु किलात्मज्ञस्त्यक्ताविद्यो निमज्जति॥ द्रव्यमन्त्रक्रियाकालयुक्तयः साधुसिद्धिदाः। परमात्मपदप्राप्तौ नोपकुर्व्वन्ति काश्चन॥" [ योगवासिष्ठे ५। ८९। ९। १२। १३। १४। २१ श्लोकः ] इति। आत्मविषयस्तु सम्प्रज्ञातसमाधिर्वासनाक्षयस्य निरोधसमाधेश्च हेतुः तस्मात् तत्रादरः कृतः। अथ पञ्चभूमिकारूपः चित्तस्य निरोधलक्षणः समाधिर्निरूप्यते।—तञ्च समाधिं सूत्रयति,—"व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः" [ पात० ३ पाद० ९ सूत्रम् ] इति। व्युत्थानसंस्काराः

सोपमा स्मृता" इति च [ भगवद्गीता ६ अध्या० १९ श्लोकः ] ॥ १८५ ॥

अथ जीवन्मुक्तलक्षणमुच्यते ॥ १८६ ॥

जीवन्मुक्तोनाम स्वस्वरूपाखण्डब्रह्मज्ञानेन

---

समाधिविरोधिनः, ते च निरोधहेतुना योगिप्रयत्नेन प्रतिदिनं प्रतिक्षणञ्च अभिभूयन्ते, तद्विरोधिनश्च संस्काराः प्रादुर्भवन्ति। तथा सति निरोधे एकैकस्मिन् क्षणे चित्तमनुगच्छति, सोऽयमीदृशश्चित्तस्य परिणामो भवति यदा, तदा असंप्रज्ञातसमाधिरुच्यते इत्यर्थः ॥ १८५ ॥ सु० ।

एतत् समाधिद्वयं जीवन्मुक्तस्यैव भवति नान्यस्येति मनसि निधाय प्रथमं जीवन्मुक्तस्वरूपं प्रतिपादयितुं प्रतिजानीते, अथेत्यादि ॥ १८६ ॥ सु० ।

तस्य लक्षणमाह, "जीवन्मुक्तो नाम" इत्यादिना "ब्रह्मनिष्ठः" इत्यन्तेन। अत्र अखिलबन्धरहितो ब्रह्मनिष्ठो जीवन्मुक्त इति तस्य लक्षणम्। जीवतः पुरुषस्य हि कर्त्तृत्वभोक्तृत्वसुखदुःखलक्षणोऽखिलो यश्चित्तधर्म्मः स क्लेशस्वरूपत्वाद् बन्धो भवति,

---

एवंविधसमाध्यन्तसाधनानुष्ठानपरिपाके सति पूर्व्वोक्तप्रकारेण ब्रह्मात्मैक्यसाक्षात्कारे दृढ़ीभूतेऽविद्यातत्कार्य्यात्मकसर्व्वसंसारनिवृत्तौ जायमानायां काकतालीयन्यायेन यदि प्रारब्धकर्म्मक्षयात् तत्काल एव विदुषः शरीरपातस्तदा सद्य एव मुक्तिः स्यात् ॥ १८१—१८५ ॥ विद्व० ।

यदा तु ज्ञानोत्पत्तिसमये प्रारब्धकर्म्म न क्षीयते, तदा तत्क्षयपर्य्यन्तं शरीरस्यावस्थानाज्जीवन्नेव मुक्तसंसारी भवति। तस्य लक्षणं वक्तुं प्रतिजानीते, अथ इति। अथशब्दः साधननिरूपणानन्तर्य्यार्थः ॥ १८६ ॥ विद्व० ।

लक्षणमाह, जीवन्मुक्तो नाम इति। ब्रह्मनिष्ठत्वं वेदान्तवेद्यब्रह्मात्मनावस्थितत्वम्। ब्रह्मनिष्ठो जीवन्मुक्त इत्युक्ते परमार्थतो ब्रह्मनिष्ठत्वममुक्तस्याप्यस्तीत्यतो विशिनष्टि,

तदज्ञानबाधनद्वारा स्वस्वरूपाखण्डब्रह्मणि साक्षात्कृते सति अज्ञानतत्कार्य्यसञ्चितकर्म्म-संशयविपर्य्ययादीनामपि बाधितत्वादखिलबन्ध-रहितो ब्रह्मनिष्ठः।—“भिद्यते हृदयग्रन्थि-श्छिद्यन्ते सर्व्वसंशयाः। क्षीयन्ते चास्य कर्म्माणि

---

तेन रहितः परित्यक्तबन्धनो ब्रह्मणि निष्ठा तदेकपरता यस्य स ब्रह्मनिष्ठो जीवन्मुक्त इत्यर्थः।

सकलबन्धराहित्ये हेतुमाह, स्वस्वरूपेति। गुरुश्रुति-स्वानुभवैर्ब्रह्मात्मैकत्वविज्ञानेन मूलाज्ञानतत्कार्य्यसञ्चितकर्मादी-नामपि बाधितत्वात् सर्व्वबन्धराहित्यमुपपद्यते इत्यर्थः। तत्र च श्रुतिमाह, भिद्यते इत्यादि ॥ १८७ ॥ सु०।

---

अखिलबन्धरहित इति। परममुक्तवैधर्म्यसिद्धये प्रारब्धकर्म्ममात्रशेष इति विशेषणा-न्तरमध्याहर्त्तव्यम्। कथमसौ मुक्तः? इत्यपेक्षायामाह, अज्ञानतत्कार्य्य इति। अज्ञानं सदसद्भ्यामनिर्वचनीयमित्याद्युक्तलक्षणम्। तत्कार्य्यं स्थूलसूक्ष्मप्रपञ्चद्वयम्। सञ्चितं कर्म्म ज्ञानोत्पत्तेः प्रागुत्पन्नमनारब्धफलम्। संशयो देहाद्यतिरिक्तो ब्रह्मस्वरूप आत्मा भवति न वेति; अथवा ब्रह्मात्मविज्ञानान्मोक्षो भवेन्न वेत्यादिर्विचिकित्सा। विपर्य्ययो देहादिषु आत्माभिमानादिलक्षणः, आदिशब्दाद्बाह्यप्रपञ्चे सत्यत्वबुद्धिः। एतेषां बाधितत्वान्मुक्त इत्यर्थः। एतत्कदा स्यात्? इत्याकाङ्क्षायामाह, स्वस्वरूपाखण्ड-ब्रह्मणि साक्षात्कृते सति इति। साक्षात्कारे साधनमाह, स्वस्वरूपाखण्डब्रह्मज्ञानेनेति। तत्त्वसाक्षात्कारानन्तरं मुक्त एव भवतीत्यत्र प्रमाणमाह, भिद्यत इति। हृदयग्रन्थि-रहङ्कारः चिज्जडात्मकत्वात् ग्रन्थिरिव ग्रन्थिः। सर्व्वसंशयाः दृष्टादृष्टार्थविषया विचिकित्साः। अस्यात्मनः कर्म्माणि जीवन्मुक्तिपक्षे प्रारब्धातिरिक्तानि सञ्चितानि क्रियमाणानि च। तथा च न्यायः “तदधिगम उत्तरपूर्व्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्” [ब्रह्म० सू० ४ अध्या० १ पा० १३ सूत्रम्] इति। परममुक्तिपक्षे प्रारब्धसहितान्यपि क्षीयन्ते कदा? तस्मिन्निष्प्रपञ्चे ब्रह्मात्मनि दृष्टेः सति साक्षात्कृते सति। कथम्भूते? परावरे—सर्व्वात्मके। अत्र सर्व्वात्मकत्ववचनं तद्व्यतिरिक्तस्या-

तस्मिन् दृष्टे परावरे” [ मुण्ड० उप० २ मुण्ड० २ खण्ड० ८ मन्त्रः ] इत्यादिश्रुतेः ॥ १८७ ॥

अयन्तु व्युत्थानसमये मांसशोणितमूत्रपुरीषादिभाजनेन शरीरेण, आन्ध्यमान्द्यापटुत्वादिभाजनेन इन्द्रियग्रामेण, अशनायापिपासाशोकमोहादिभाजनेन अन्तःकरणेन च तत्तत्पूर्व्वपूर्व्व-

---

ननु एतादृशस्य जीवन्मुक्तस्य देहेन्द्रियादिभानमस्ति न वा? इत्याशङ्क्य दग्धपटन्यायेन इन्द्रजालनिर्मितसौधसमुद्रादिवच्च बाधितानुवृत्त्या मिथ्यात्वेन भानेऽपि परमार्थतया भानं न इत्याह, अयमित्यादिना न पश्यतीत्यन्तेन।

---

भावपरम्। चौरः स्थाणुरितिवद्वाधायां सामानाधिकरण्यस्य विवक्षितत्वात्; यद्वा—परो हिरण्यगर्भः सोऽवरो न्यूनो यस्मात् तस्मिन् परावर इत्याथर्व्वणीयश्रुत्यर्थः। आदिपदात् “यस्तु सर्व्वाणि भूतानि” [ ईश० उप० ६ मन्त्रः ] “यस्मिन् सर्व्वाणि भूतानि” [ ईश० उप० ७ मन्त्रः ] इति च मन्त्रद्वयमीशावास्यगतं परिगृह्यते। श्रुतेश्चेति।—चकारात् “यथैधांसि समिद्धोऽग्निः” [ भगवद्गीता ४ अध्या० ३७ श्लोकः ] “यज्ज्ञात्वा न पुनर्मोहं” [ भगवद्गीता ४ अध्या० ३५ श्लोकः ] “ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति” [ भगवद्गीता १८ अध्या० ५४ श्लोकः ] इत्यादिस्मृतयः समुच्चीयन्ते। न च जीवन्मुक्तौ प्रमाणाभावः। “तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेते” [ बृह० उप० ४ अध्या० ४ ब्रा० ७ मन्त्रः ] “तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये” [ छान्दो० ६ अध्या० १४ खण्ड० २ मन्त्रः ] इत्यादिश्रुतेः “प्रजहाति यदा कामान्” [ भगवद्गीता २ अध्या० ५५ श्लोकः ] “प्रकाशञ्च प्रवृत्तिञ्च” [ भगवद्गीता १४ अध्या० २२ श्लोकः ] इत्यादिस्मृतेश्च प्रमाणत्वादिति द्रष्टव्यम् ॥ १८७ ॥ विद्व०।

ननु जीवन्मुक्तो देहेन्द्रियादिभिर्व्यवहरति न वा? आद्ये तस्य बद्धान्न विलक्षणता। द्वितीये देहस्यानुपयोगात्तस्य पातप्रसङ्गः इत्याह, अयन्तु इति। आरब्धफलानि

वासनया क्रियमाणानि कर्म्माणि भुज्यमानानि ज्ञानाविरुद्धानि आरब्धफलानि च पश्यन्नपि वाधितत्वात् परमार्थतो न पश्यति। यथा इद-मिन्द्रजालमिति ज्ञानवान् तत् इन्द्रजालं पश्य-न्नपि परमार्थमिदमिति न पश्यति। "सचक्षुर-चक्षुरिव सकर्णोऽकर्ण इव समना अमना इव सप्राणोऽप्राण इव" इत्यादिश्रुतेः। उक्तञ्च,— "सुषुप्तवज्जाग्रति यो न पश्यति द्वयञ्च पश्यन्नपि

---

अस्मिन्नर्थे श्रुतिमाह, सचक्षुरित्यादि।

आचार्य्यवचनं प्रमाणयति, उक्तञ्चेत्यादि। इह जगति स एवात्मवित् नान्य इति मे निश्चय इत्यन्वयः।

स कः? इत्यपेक्षायामाह, य इति।—यः कोऽपि महापुरुषो ब्रह्मात्मैकत्वसाक्षात्कारेण निरस्तसमस्तभेदवुद्धिः सुषुप्तावस्थायां यथा द्वैतं न पश्यति, तथा ब्रह्मदृष्टिदार्ढ्येन जाग्रदवस्थायामपि

---

भुज्यमानानि पूर्व्वपूर्व्ववासनया क्रियमाणानि च कर्म्माणि साक्षितया कर्तृत्व-भोक्तृत्वाभिमानहीनोऽन्यदृष्ट्या पश्यन्निव भासमानोऽपि परमार्थतः स्वदृष्ट्या न पश्यति ज्ञानेन कर्तृत्वाद्यभिमानमूलाज्ञानस्य वाधितत्वादज्ञादिविलक्षण एवायमित्यर्थः। बलवत् प्रयुक्तवाणपाषाणादिवत् प्रवृत्तफलस्य कर्म्मणो यावद्वेगक्षयं निवारकाभावात् तदधीनस्य देहस्य न सद्यः पातप्रसङ्ग इति द्रष्टव्यम्। उक्तमर्थं दृष्टान्तेन स्पष्टयति, यथेन्द्रजाल-मिति।—वाधितत्वबुद्धेरनुवृत्तेरित्यर्थः। जीवन्मुक्तो देहादिभिर्व्यवहरन्निव दृश्यमानो-ऽपि न परमार्थतो व्यवहरतीत्यत्र श्रुतिं प्रमाणयति, सचक्षुरचक्षुरिवेति।—चक्षुरादि-मानपि प्रपञ्चरूपाद्यदर्शनाच्चक्षुरादिहीन इव भवतीत्यर्थः। आदिपदात् "तदेजति तन्नैजति" [ ईश० उप० ५ मन्त्रः ] इत्यादिश्रुत्यन्तरग्रहः। उक्तेऽर्थे पूर्वाचार्य्यसम्मति-माह, उक्तञ्च सुषुप्तवदिति। जाग्रति जाग्रदवस्थायां द्वयं पश्यन्नपि यः सुषुप्तिं गतवद्

चाद्वयत्वतः। तथा च कुर्व्वन्नपि निष्क्रियश्च यः स आत्मविन्नान्य इतीह निश्चयः॥" इति [ उपदेशसाहस्री १० प्रक० १३ श्लोकः ] ॥ १८८ ॥

अस्य ज्ञानात् पूर्व्वं विद्यमानानामेव आहारविहारादीनाम् अनुवृत्तिवत् शुभवासनानामेव

द्वैतं न पश्यति तद्दृष्ट्या ब्रह्मव्यतिरिक्तजड़पदार्थाभावात् स तथोक्तः। किञ्च, कदाचित् व्युत्थानदशायामाविद्यकसंस्कारलेशवशात् भिक्षाऽटनादिव्यवहारेण द्वयं पश्यन्नपि समाध्यभ्याससामर्थ्यवशादद्वयत्वेन पश्यति, स च तथोक्तः। यश्च लोकसंग्रहार्थं नित्यादिकर्म्माणि कुर्वन्नपि आत्मनि कर्त्तृत्वाभावनिश्चयेन निष्क्रियः कर्म्मरहितो भवति कर्म्मफलेन न लिप्यते स जीवन्मुक्तो नात्र संशयः कर्त्तव्य इत्यर्थः॥ १८८ ॥ सु०।

ननु अस्य जीवन्मुक्तस्य योगीश्वरस्य मम पुण्यपापलेशो नास्तीति अभिमानवशात् यथेष्टाचरणप्रसङ्गमाशङ्क्य परिहरति, अस्य ज्ञानादिति। अस्य पूर्व्वोक्तजीवन्मुक्तस्य ज्ञानात् प्रागेव शान्त्यादिगुणैः अशुभवासनाया निवारितत्वात् संसारदशायामप्रयत्नेन आहारादिप्रवृत्तिवत् तत्त्वज्ञानोत्तरमपि शुभानामेव वासनानामनुवृत्तिर्भवति, नाशुभानामित्यर्थः।

विशेषतो न पश्यति स आत्मवित्। विशेषादर्शने हेतुरद्वयत्वत इति।—द्वयस्य बाधितत्वादित्यर्थः। तथा कुर्व्वन्नपि न करोति यतो निष्क्रिय इति योजना। तथा च वसिष्ठः "सुषुप्तवद्यश्चरति स मुक्त इति कथ्यते" [ योगवासिष्ठ ५। १६। १९ ] इति॥ १८८॥ वि०।

नन्वसौ जीवन्मुक्त इति कथमन्यैर्ज्ञायत इति तदाह, अस्य ज्ञानात् पूर्व्वमिति। अशुभवासनानां साधकावस्थायामेव निवर्त्तितत्वाच्छुभवासनानामेवानुवृत्तिर्भवतीत्यर्थः।

अनुवृत्तिर्भवति, शुभाशुभयोरौदासीन्यं वा।
तदुक्तं,—"बुद्धाद्वैतसतत्त्वस्य यथेष्टाचरणं यदि।
शुनां तत्त्वदृशाञ्चैव को भेदोऽशुचिभक्षणे॥"
इति [नैष्क॰ सिद्धिः ४। ६२] "ब्रह्मवित्त्वं तथा
मुक्त्वा स आत्मज्ञो न चेतरः" इति च [उपदेश-
साहस्री १२ प्रक॰ १३ श्लोकः]॥ १८९॥

---

ननु शुभवासनानामनुवृत्तेरपि प्रयोजनाभावात् किं तदनुवृत्त्या? इत्यत आह, शुभाशुभयोरिति। तस्माज्जीवन्मुक्तस्य यथेष्टाचरणप्रसङ्गो नास्तीति भावः।

अस्मिन्नर्थे ग्रन्थान्तरं संवादयति, तदुक्तमित्यादि।

जीवन्मुक्तस्य ब्रह्मज्ञानित्वाभिमाना नास्ति इत्यत्रापि सम्मतिमाह, ब्रह्मवित्त्वमित्यादि॥ १८९॥ सु॰।

---

ननु शास्त्रविहितं शुभमेवाचरतो न साधकाद्भेद इत्यपरितुष्यन्निवाह, शुभाशुभयोरौदासीन्यं वा इति।—औदासीन्यम्—उपेक्षा "हिंसानुग्रहयोरनारम्भी" [३।२४।२५ गौतमधर्म्मशास्त्रम्] इति गौतमस्मरणात्।—"निराशिषमनारम्भं निर्नमस्कारमस्तुतिम्। अक्षीणं क्षीणकर्म्माणं तं देवा ब्राह्मणं विदुः॥" [महाभारतम्] इति व्यासवचनात्। "अमौनञ्च मौनञ्च निर्विद्याथ ब्राह्मणः" [वृह॰ उप॰ ३ अध्या॰ ५ ब्रा॰ १ मन्त्रः] इति वृहदारण्यकश्रुतेश्च। तथा चौदासीन्यमेव मुक्तलक्षणं न विधिपरतन्त्रप्रवृत्तिमत्त्वं न वा निषेधातिक्रम इति भावः।

विधिनिषेधशास्त्रपरवशत्वं चेन्मुक्तस्य न भवेत् तर्हि यथेष्टाचरणं प्राप्नोतीत्याशङ्कां नैष्कर्म्यसिद्धिवाक्येन प्रत्याचष्टे, "तदुक्तं बुद्ध" इति। सतत्त्वं—याथात्म्यम्। मुमुक्षोरपि नास्ति यथेष्टचेष्टा विदुषो मुक्तस्य कुत एव सा। तदप्युक्तं,—"यो हि यत्र विरक्तः स्यान्नासौ तस्मिन् प्रवर्त्तते। लोकत्रयाद्विरक्तत्वान्मुमुक्षुः किमितीहते॥" [उपदेशसाहस्री १८ प्रक॰ २३१ श्लोकः] "क्षुधया पीड्यमानोऽपि न विषं ह्यत्तुमिच्छति। मिष्टान्नध्वस्तदृड्जानन्नामूढस्तज्जिघत्सति॥" [उपदेशसाहस्री १८ प्रक॰ २३२ श्लोकः]

तदानीम् अमानित्वादीनि ज्ञानसाधनानि अद्वेष्टृत्वादयः सद्गुणाश्च अलङ्कारवदनुवर्त्तन्ते।

ननु विदुषां यथेष्टाचरणप्रसङ्गो नास्तीत्युक्तं तदनुपपन्नं, "न मातृबधेन न पितृबधेन" [ कौषी० उप० ३ अध्या० १ मन्त्रः ] "यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते। हत्वाऽपि स इमान् लोकान् न हन्ति न निबध्यते॥" [ भगवद्गीता १८ अध्या० १७ स्लोकः ] "हयमेधशतसहस्राण्यथ कुरुते ब्रह्मघातलक्षाणि। परमार्थविन्न पुण्यैर्नं च पापैर्लिप्यते मनुजः॥" [ परमार्थसारः ] "अश्वमेधसहस्राणि ब्रह्महत्याशतानि च। कुर्व्वन्नपि न लिप्येत यद्येकत्वं प्रपश्यति॥" [ सूतसंहिता ] "सभयादभयं प्राप्तस्तदर्थं यतते च यः। स पुनः सभयं गन्तुं स्वतन्त्रश्चेन्न हाच्छति॥" [ उपदेशसाहस्री १८ प्रक० २२८ स्लोकः ] "आरब्धकर्म्मनानात्वात् बुद्धानामन्यथान्यथा। वर्त्तनं तेन शास्त्रार्थे विभ्रान्तव्यं न पण्डितैः॥" [पञ्चदशी ६परि० २८७स्लोकः] इत्यादि श्रुतिस्मृत्यभियुक्तवाक्यैर्विदुषां यथेष्टाचरणत्वाङ्गीकारादिति चेत् सत्यं, तेषां वचनानां विद्वत्स्तुतिपरत्वेन तत्कर्त्तव्यमित्यत्र तात्पर्य्याभावात्। तदुक्तमाचार्य्यैः,—"अधर्माज्जायतेऽज्ञानं यथेष्टाचरणं ततः। धर्म्मकार्य्ये कथं तत् स्याद् यत्र धर्मोऽपि नेष्यते॥" इति [ नैष्क० सिद्धिः ४।६२ ]।

नन्वेवम् "अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम्" [ भगवद्गीता १३ अध्या० ७ स्लोकः ] इत्यादि स्मृत्युक्तसाधनस्य, "अद्वेष्टा सर्व्वभूतानाम्" [ भगवद्गीता १२ अध्या० १३ स्लोकः ]

"रागो लिङ्गमबोधस्य चित्तव्यायामभूमिषु। कुतः शाड्वलता तस्य यस्याग्निः कोटरे तरोः॥" [ नैष्क० सिद्धिः ४।६५ ] इत्यादि॥ १८९॥ विद्व०।

नन्वविद्याकार्य्यत्वादयथेष्टचेष्टाया अविद्यानिवृत्त्या तन्निवृत्तिवदमानित्वादीनामद्वेष्ट्

तदुक्तं,—"उत्पन्नात्मावबोधस्य ह्यद्वेष्टृत्वादयो गुणाः। अयत्नतो भवन्त्यस्य न तु साधनरूपिणः॥" [ नैष्क० सिद्धिः ४।६९ ] इति ॥ १९० ॥

किं बहुना, अयं देहयात्रामात्रार्थमिच्छानि-

इत्यादिवचनैः प्रतिपाद्यमानाद्वेष्टृत्वादिगुणसमूहस्य च विदुषां सम्पाद्यमानत्वश्रवणात् तेन सह विरोधमाशङ्क्यामानित्वादि-सम्पादनस्य च विविदिषासन्न्यासविषयत्वात् विदुषान्तु लक्षण-त्वेनालङ्कारवदनुवर्त्तनात् न विरोध इत्याह, तदानीमित्यादि। जीवन्मुक्तावस्थायामित्यर्थः।

अस्मिन्नर्थे वार्त्तिकसम्मतिमाह, तदुक्तमित्यादि। अस्य विद्वत्सन्न्यासिनो जीवन्मुक्तस्याद्वेष्टृत्वादयो गुणाः अप्रयत्नेन स्वत एव भवन्ति, न तु साधनरूपिणः तं प्रति ते साधनरूपाः न भवन्ति।

तत्र हेतुमाह, उत्पन्नेति।—यत उत्पन्न आत्मावबोधो ब्रह्मात्मैकत्वनिश्चयरूपः अतस्तस्य ते गुणाः लक्षणत्वेनैव भवन्तीत्यन्वयः ॥ १९० ॥ सु०।

इयता प्रबन्धेन प्रतिपादितेऽस्मिन् वेदान्तसाराख्ये ग्रन्थे श्रीमत्परमगुरु परमहंस--परिव्राजकाचार्य्य--सदानन्दयोगीन्द्रेण महापुरुषेण अथ वेदान्तो नामेत्यारभ्य साधनचतुष्टयसम्पन्नस्य प्रमातुरधिकारिणो मूलाज्ञाननिवृत्तिपरमानन्दप्राप्तिसिद्धये प्रतीयमानाविद्यकसकलप्रपञ्चजातस्य ब्रह्मणि अध्यारोपापवाद-

त्वादीनामपि अविद्याकार्य्यत्वाविशेषान्निवृत्तिरेव स्यान्नानुवृत्तिरित्याशङ्क्य नियोगवशा-दनुवृत्त्यभावेऽपि निवृत्तिशास्त्राविरुद्धस्वभावत्वान्न निवर्त्तेरन्निति दर्शयति, तदानीमिति। तत्रापि नैष्कर्म्यसिद्धिमुदाहरति, "तदुक्तम् उत्पन्न" इति ॥ १९० ॥

इदानीमुक्तं जीवन्मुक्तमनूद्य तस्य परममुक्तिं दर्शयति, किंबहुना इति। देहयात्रा—

च्छापरेच्छाप्रापितानि सुखदुःखलक्षणानि आरब्धफलानि अनुभवन्नन्तःकरणाभासादीनाम् अवभासकः सन् तदवसाने प्रत्यगानन्दपरब्रह्मणि प्राणे लीने सति अज्ञानतत्कार्य्यसंस्काराणामपि विनाशात् परमकैवल्यमानन्दैकरसमखिलभेद-

पुरःसरं सविस्तरं निष्प्रपञ्चत्वं प्रतिपाद्य तत्साधनञ्च श्रवणादिकं संप्रपञ्चम् अभिधाय तस्यैवाधिकारिणस्तत्त्वमस्यादिवाक्यश्रवणानन्तरं ब्रह्मात्मैकत्वसाक्षात्कारेण निरस्तसमस्तभेदबुद्धेर्जीवन्मुक्तत्वं प्रदर्शितम्। एतावतैव कार्य्यसिद्धेः किं बहुलेखनेन ? इति मनसि निधाय सम्प्रति अस्यैव जीवन्मुक्तस्य स्वप्रकाशात्मानन्दानुभवैकनिष्ठस्य भेदप्रतीत्यभावेऽपि अविद्यालेशवशात् प्रारब्धं कर्म्म भुञ्जानो भिक्षाऽटनादिदेहयात्रामात्रक्रियाविशिष्टो ब्रह्मीभूत एव अवतिष्ठते इत्युपसंहरति, किं बहुनेत्यादिना। प्रारब्धं त्रिविधम्। स्वेच्छाकृतं भिक्षाटनादि, समाध्यवस्थायां शिष्यादिभिर्दीयमानमन्नादिकं परेच्छाकृतम्, समाध्यवस्थायां व्युत्थानदशायां वा आकाशफलपातवत् अकस्मात् जायमानं पाषाणपतनकण्टकवेधादिकमनिच्छाकृतम् ; स चायं जीवन्मुक्तः प्रोक्तत्रिविधप्रारब्धप्रापितं सुखदुःखमनुभवन् बुद्ध्यादिसाक्षितया सर्वावभासकः सन् भोगेन प्रारब्धकर्मक्षये सति प्रत्यगभिन्नपरमात्मनि प्राणादिलयानन्तरं प्रनष्टाविद्यकसंसारः कृतकृत्यः सन् गलितसकल-

देहस्थितिः। तन्मात्रार्थं न त्विन्द्रियप्रीत्यर्थम्। सुखदुःखलक्षणानि—सुखदुःखसाधनानि। आरब्धफलानि—भोग्यानि। अनुभवन्नसङ्गतया भुञ्जानः। कथं भुञ्जान इत्युच्यते अन्तःकरणाभासादीनां विषयाकारवृत्तीनां साक्षितयाऽवभासकः सन्निति यावत्। तदवसाने प्रारब्धफलभोगावसाने जाते आश्रयाभावात् प्राणे ब्रह्मणि लीने सति पूर्व्वसिद्धज्ञानेनैव प्रारब्धकर्म्माक्षिप्ताज्ञानतत्कार्य्यतत्संस्काराणामपि विनाशात्

प्रतिभासरहितमखण्डब्रह्मावतिष्ठते।—"न तस्य प्राणा उत्क्रामन्ति" [बृह० उप० ४ अध्या०

---

भेदप्रतिभासो ब्रह्मैवावतिष्ठते इति सकलवेदरहस्यतात्पर्य्यमित्यर्थः। अयं जीवन्मुक्तो बुद्ध्याद्युपाधिविलये सति घटाद्युपाधिविनिर्मुक्ताकाशवन्मुक्त इत्युपचारव्यवहारभाग्भवति, बद्धत्वस्यापि अवास्तवत्वात्। तदुक्तमाचार्य्यैः,—"न निरोधो न चोत्पत्तिर्न बन्धो न च साधकः। न मुमुक्षुर्न वा मुक्त इत्येषा परमार्थता॥" अस्य जीवन्मुक्तस्योपाधिविगमसमये प्राणाख्यं लिङ्गशरीरमतितप्तलौहक्षिप्तनीरबिन्दुवत् प्रत्यगभिन्नपरमानन्दलीनत्वात् स्थूलशरीरं न उत्तिष्ठतीति।

तत्र श्रुतिमाह न तस्येत्यादि।—अयं जीवन्मुक्तो जीवन्नेव दृश्यमानात् रागद्वेषादिबन्धनात् विशेषेण मुक्तः सन् वर्त्तमानदेहपाते सति भाविदेहबन्धात् विशेषेण मुच्यते इत्यत्रापि श्रुतिमाह, विमुक्तश्चेति। बृहदारण्यकेऽपि,—"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते॥" इति [बृह० उप० ४ अध्या० ४ ब्रा० ७ मन्त्रः]। वासिष्ठेऽपि—"जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते। भवत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव॥" इति योगवासिष्ठे [३।९।१४]। "असङ्गो ह्ययं पुरुषः," [बृह० उप० ४ अध्या० ३ ब्रा० १५ मन्त्रः] "आकाशवत् सर्वगतश्च नित्यः" [छान्दो० उप० ६ अध्या० ३ खण्ड० २य मन्त्रभाष्ये काठकस्योल्लेखः]

---

सञ्चितकर्म्मणां ज्ञानेन दाहात् क्रियमाणैश्चासंश्लेषात् पुनर्देहान्तरहेत्वभावात् परमकैवल्येश्वादिनोक्तब्रह्मस्वरूप एवावतिष्ठते विद्वानित्यर्थः।

निर्गुणब्रह्मसाक्षात्कारवतः प्राणा नोत्क्रामन्ति, किन्तु प्रत्यग्ब्रह्मण्येव तप्ताय:पीताम्बुवल्लीयन्त इत्यत्र प्रमाणमाह, न तस्य इति। मुक्तेरसाध्यत्वे काठकश्रुतिं प्रमाणयति,

४ ब्रा० ६ मन्त्रः] "अत्रैव समवलीयन्ते" [बृह०

"अस्नाविरं शुद्धमपापविद्धम्" [ईश उप० ८ मन्त्रः] इत्यादि-श्रुत्या प्रत्यगात्मनो नित्यत्वपरिपूर्णत्वकूटस्थत्वश्रवणात् उत्पत्त्याप्तिविकृतिसंस्कारचतुर्विधक्रियाफलविलक्षणत्वेन विद्यया नित्यनिवृत्ताविद्यानिवृत्तिमात्रेण प्राप्त एवात्मा पुनः प्राप्त इत्युपचर्य्येत। अधिष्ठानस्य गमनाभावे अध्यस्तस्य लोकान्तरगमनायोगात् न सालोक्यादिमुक्तिसम्भवः।

ननु अप्राप्तस्य क्रियासाध्यस्य वस्तुनो विद्यमानानर्थनिवृत्तेश्च पुरुषार्थत्वं दृष्टम्; अत्र तदभावात् कथं पुरुषार्थत्वमिति चेत्? न; तयोरेव पुरुषार्थत्वमिति नियमाभावात्, स्वच्छायायामारोपितरक्षसो विस्मृतकण्ठगतचामीकरस्य भ्रान्तपुरुषस्य आप्तवाक्येन तयोर्निवृत्त्याप्त्योरपि पुरुषार्थत्वदृष्टेः। अत्र संग्रहः।—"आत्माज्ञानमलं निरस्तममलं प्राप्तञ्च तत्त्वं परं कण्ठस्थाभरणादिवद्भ्रमवशाच्छायापिशाची यथा। आप्तोक्त्याप्तिनिवृत्तिवच्छ्रुतिशिरोवाक्याद्गुरोरुत्थिताद्ध्वस्तध्वान्तनिरासतः परसुखं प्राप्तं तयोरुच्यते॥" इति।

न च मुक्तानामपि वसिष्ठभीष्मप्रभृतीनाम् अपरोक्षज्ञानिनां पुनर्देहान्तरश्रवणात् केवलज्ञानोत्पत्तिसमय एवाल्पज्ञानाम् अस्माकं मुक्तिर्भवतीति कथं विश्वसिमः, अतो ज्ञानव्यतिरिक्तमपि उपायान्तरं किञ्चित् कर्त्तव्यमिति वाच्यं, शास्त्रप्रामाण्यादेव तदुपपत्तेः। "ब्रह्म वेद ब्रह्मैव भवति," [मुण्ड० ३ मुण्ड० २ खण्ड० ९ मन्त्रः] "तरति शोकमात्मवित्" [छान्दो० ७ अध्या० १ खण्ड० ३ मन्त्रः] इत्यादिश्रुतिभिर्ज्ञानोत्पत्तिसमयमेव मुक्तिप्रतिपादनात्। तदुक्तं शेषेण,—"तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन् देहम्। ज्ञानसमकाले मुक्तः

उप० ३ अध्या० २ ब्रा० ११ मन्त्रः] "विमुक्तश्च विमुच्यते" [कठ० उप० ५ वल्ली० १ श्लोकः] इत्येवमादिश्रुतेः॥ १९१॥

श्रीमत्परमहंसपरिव्राजकाचार्य्यसदानन्दकृत
वेदान्तसारः समाप्तः।

---

कैवल्यं याति हतशोकः॥" [परमार्थसारः ८२ श्लोकः] इति। वसिष्ठादीनां त्वाधिकारिकपुरुषत्वेन यावदधिकारं प्रारब्धवेग-प्रयुक्तशापादिना स्वीकृतावान्तरदेहपातेऽपि तद्देहभाविभोगस्य निवारयितुमशक्यत्वात् प्रारब्धस्य विना भोगेन क्षयानुपपत्तेः। "यावदधिकारमवस्थितिराधिकारिकाणाम्" [ब्रह्म० सू० ३ अध्या० ३ पा० ३२ सूत्रम्] भगवद्व्यासैर्विशेषितत्वात्। अस्म-दादीनाञ्च प्रारब्धकर्म्मणोऽनेकदेहारम्भकत्वसम्भवेऽपि चरमदेहं विनाऽपरोक्षज्ञानोत्पत्तेरसम्भवात्; वामदेवे तथा दृष्टत्वात्। अन्यथा गर्भस्थस्य श्रवणाद्यभावेन ज्ञानोत्पत्त्यनुपपत्तेः।

ननु ज्ञानिनामपि स्वप्नावस्थायां देहान्तरस्वीकारवत् मुक्ताना-मपि पुनर्देहान्तरस्वीकारः किं न स्यात्? इति चेन्न, "कण्ठे स्वप्नं समाविशत्" इत्यादिवाक्येषु कण्ठान्निर्गमनाभावश्रवणात्, देहा-न्तरप्राप्तिस्तु तदनन्तरप्रतिपत्ताविल्यत्र देहान्निर्गमनश्रवणात् वैषम्यम्। तदुक्तं स्कान्दे,—"यस्मिन् देहे दृढं ज्ञानमपरोक्षं विजायते। तद्देहपातपर्य्यन्तमेव संसारदर्शनम्॥ पुराऽपि नास्ति संसारदर्शनं परमार्थतः। कथं तद्दर्शनं देहविनाशा-

---

विमुक्तश्च विमुच्यत इति। पूर्व्वमपि मुक्त एव सन्नविद्याप्रत्युपस्थापितनामरूपोपाध्य-विवेकनिबन्धनस्य संसाराभासस्य नित्यशुद्धबुद्धमुक्तसत्यपरमानन्दाद्वयप्रत्यग्ब्रह्मरूपोऽह-मस्मीत्यपरोक्षज्ञानाद्विलयापेक्षया विमुच्यत इत्यर्थः। वस्तुतस्तु न बन्धो न वा मोक्षः।

दूर्द्धमुच्यते॥ तस्माद्ब्रह्मात्मविज्ञानं दृढ़ं चरमविग्रहे। जायते मुक्तिदं ज्ञानं प्रसादादेव मुच्यते॥" इति। तस्मात् सुष्ठूक्तं "विमुक्तश्च विमुच्यते" इति॥ १८१॥ सु०।

नित्यशुद्धपरिपूर्णमद्वयं सच्चिदात्मकमखण्डमक्षरम्।
सर्व्वदा सुखमबोधतत्कृतैर्वर्जितं सदहमस्मि तत्परम्॥
गोवर्द्धनप्रेरणया विमुक्ते चेत्रे पवित्रे नरसिंहयोगी।
वेदान्तसारस्य चकार टीकां सुबोधिनीं विश्वपतेः पुरस्तात्॥
जाते पञ्चशताधिके दशशते संवत्सराणां पुनः
सञ्जाते दशवत्सरे प्रभुवरः श्रीशालिवाहे शके।
प्राप्ते दुर्मुखवत्सरे शुभशुचौ मासेऽनुमत्यां तिथौ
प्राप्ते भार्गववासरे नरहरिष्टीकाञ्चकारोज्ज्वलाम्॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्य श्रीमत्कृष्णानन्दभगवत्पूज्यपादशिष्य-
श्रीनृसिंहसरस्वतीकृता सुबोधिन्याख्या
वेदान्तसारटीका।

---

तथा च श्रुतिः।—"न निरोधो न चोत्पत्तिर्न बन्धो न च साधकः। न मुमुक्षुर्न वा मुक्त इत्येषा परमार्थता॥" इत्याद्या॥ १८१॥ विद्व०।

विद्यासीतावियोगक्षुभितनिजसुखः शोकमोहाभिपन्न-
श्चेतःसौमित्रिमित्रो भवगहनगतः शास्त्रसुग्रीवसख्यः।
हत्वास्ते दैन्यवालिं मदनजलनिधौ धैर्य्यसेतुं प्रबध्य
प्रध्वस्ताबोधरक्षःपतिरधिगतचिज्जानकिः स्वात्मरामः॥
वेदान्तसारविवृतिं रामतीर्थाभिधो यतिः।
चक्रे श्रीकृष्णतीर्थश्रीपदपङ्कजषट्पदः॥

इति श्रीकृष्णतीर्थपूज्यपादशिष्यश्रीरामतीर्थयतिविरचिता
विद्वन्मनोरञ्जनीनाम्नी वेदान्तसारटीका।

---

# हस्तामलकम् ।

कस्त्वं शिशो ! कस्य कुतोऽसि गन्ता
किं नाम ते त्वं कुत आगतोऽसि ? ।
एतद्वद त्वं मम सुप्रसिद्धं
मत्प्रीतये प्रीतिविवर्द्धनोऽसि ॥

---

हस्तामलकभाष्यम् ।—

यस्मिन् ज्ञाते भवेत् सर्वं विज्ञातं परमात्मनि ।
तं वन्दे नित्यविज्ञानमानन्दमजमव्ययम् ॥
यदज्ञानादभूत् द्वैतं ज्ञाते यस्मिन्निवर्त्तते ।
रज्जुसर्पवदत्यन्तं तं वन्दे पुरुषोत्तमम् ॥
यस्योपदेशदीधित्या चिदात्मा नः प्रकाशते ।
नमः सद्गुरवे तस्मै अविद्याध्वान्तभास्वते ॥

इह खलु सर्वजन्तोः सुखं मे भूयात् दुःखं मा भूदिति स्वरसतः सुखोत्पादित्सादुःखजिहासे भवतः, तत्र कश्चित् पुण्यातिशयशाली अवश्यम्भाविदुःखाविनाभूतत्वात् अनित्यत्वाच्च विषयसुखं दुःखपक्षे निःक्षिप्य संसारादत्यन्तं विरज्यते, विरक्तः संसारहानौ यतते संसारस्य च आत्मस्वरूपाज्ञानहेतुत्वात् आत्मज्ञानान्निवृत्तिरिति तं प्रति आत्मज्ञानमुपदिशत्याचार्य्यः। ननु सर्वत्र ग्रन्थादौ शिष्टानामिष्टदेवतानमस्कारस्तुतिपूर्विका प्रवृत्तिरुपलब्धा, अयञ्च विना स्तुतिनमस्कारौ प्रवर्त्तमानोऽशिष्टत्वादनवधेयवचनः प्रसज्येत ? न, स्तुतिनमस्कारयोस्त्रैविध्यात्, त्रिविधौ स्तुतिनमस्कारौ कायिकौ वाचनिकौ मानसौ चेति। अत्र कायिकवाचनिकयोरभावेऽपि परमशिष्टत्वादाचार्य्यस्य

नाहं मनुष्यो न च देवयक्षौ
न ब्राह्मणक्षत्रियवैश्यशूद्राः ।
न ब्रह्मचारी न गृही वनस्थो
भिक्षुर्न चाऽहं निजबोधरूपः ॥
निमित्तं मनश्चक्षुरादिप्रवृत्तौ
निरस्ताऽखिलोपाधिराकाशकल्पः ।
रविर्लोकचेष्टानिमित्तं यथा यः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ १ ॥

ग्रन्थस्याविघ्नेन परिसमाप्तेश्च मानसस्तुतिनमस्कारावकार्षी-दयमाचार्य्य इत्यवगम्यते । यत्किञ्चिदेतत् प्रकृतमनुसरामः ।

निमित्तमित्यादि ।—मनश्च चक्षुश्च मनश्चक्षुषी ते आदिनी येषां तानि मनश्चक्षुरादीनि । आदिशब्दः प्रत्येकमभि-सम्बध्यते ; ततश्चायमर्थो भवति,—मन आदीनां मनोबुद्ध्य-हङ्कारचित्तानां चतुर्णां अन्तःकरणानां, तथा चक्षुरादीनां चक्षुस्त्वक्श्रोत्रजिह्वानासिकानां पञ्चबुद्धीन्द्रियाणाम्, एवं वाक्-पाणिपादपायूपस्थानां पञ्चकर्मेन्द्रियाणां प्रवृत्तौ स्वस्वव्यापारे निमित्तं हेतुर्यः सोऽहमात्मेति । नित्योपलब्धिस्वरूपः,—नित्या चासौ उपलब्धिश्चेति, सा स्वरूपं यस्य स तथोक्तः । रविरादित्यो यथा येन प्रकारेण प्रकाशकत्वेन लोकानां चेष्टायां परिष्पन्दने निमित्तं, तथैवाऽधिष्ठातृत्वेन यो निमित्तमित्यर्थः । इयञ्चात्मज्ञाने उपायत्वेन दर्शिता प्रक्रिया, परमार्थतस्तु निरस्ता निराकृता अखिला निरवशेषा उपाधयो बुद्ध्यादिलक्षणा यस्य स तथोक्तः । निरस्ताखिलोपाधित्वादेवाकाशकल्पः आकाशवत् विशुद्धो यः सोऽहमात्मेति सम्बन्धः ॥ १ ॥

यमग्न्युष्णवन्नित्यबोधस्वरूपं
मनश्चक्षुरादीन्यबोधात्मकानि।

ननु मनश्चक्षुरादीनां प्रवृत्तौ किमर्थमधिष्ठाता इष्यते? स्वयमेव कथं न प्रवर्त्तते? कथञ्च नित्योपलब्धिस्वरूपत्वमधिष्ठातुरित्यत आह, यमित्यादि।—यं नित्यबोधस्वरूपमात्मानम् आश्रित्य मनश्चक्षुरादीनि प्रवर्त्तन्ते सोऽहमात्मेति सम्बन्धः। ननु कथं बोधस्य नित्यता? बोधो हि नाम ज्ञानं, तच्च इन्द्रियार्थसन्निकर्षादेव समुत्पद्यते, उत्पन्नञ्च स्वकार्य्यसंस्कारेण विरोधिज्ञानान्तरेण च विनश्यति, अत उत्पत्तिविनाशशालित्वादनित्यं भवितुमर्हति; नापि बोधस्वरूपः आत्मा उपलभ्यते, नित्यत्वात् आत्मनोऽनित्यत्वाच्च बोधस्य, न हि नित्यानित्ययोरेकस्वभावत्वं विरोधात्; अत्रोच्यते,—बोधो हि नाम चैतन्यमभिप्रेतं, न च ज्ञानं चैतन्यं, तस्य ज्ञेयत्वेन घटादिवत् जड़त्वात्, ज्ञेयं हि घटज्ञानं ज्ञानं मे जातमित्यस्य साक्षादनुभूयमानत्वात्, अतस्तस्यानित्यत्वेऽनात्मरूपत्वेऽपि नित्यबोधस्वरूपत्वमात्मनो नायुक्तमिति। ननु आत्मनश्चेतनत्वे किं मानम्? जगत्प्रकाश इति ब्रूमः, जगत् प्रकाशते इति सर्वजनप्रसिद्धम्; अत्र ज्ञानादीनां ज्ञेयत्वेन जड़त्वात् आत्मप्रकाशेनैव जगत्प्रकाश इति निश्चितं भवति सवितृप्रकाशवत्; यथा सविता स्वयं प्रकाशमानो जगत् प्रकाशयति, एवमात्माऽपीति। अस्तु तर्हि चिद्धर्मः पुरुषः कथमयं चित्स्वभावः इति, न, धर्मधर्मिभावस्यानुपपत्तेः; तथाहि,—चैतन्यमात्मनो भिन्नमभिन्नं वा भिन्नाभिन्न वा इति। न तावत् भिन्नं भिन्नत्वे आत्मघटादिवत् धर्म्मधर्म्मित्वानुपपत्तेः। ननु घटादिरसम्बन्धादात्मधर्मो न भवति, चैतन्यन्तु आत्मसम्बन्धीति युक्त-

मात्मधर्मत्वमिति, न, सम्बन्धानुपपत्तेः। सम्बन्धो हि भवन् संयोगो वा स्यात् समवायो वा, सम्बन्धान्तरस्य अत्राभावात्; अत्र संयोगस्य द्रव्यधर्मत्वात् अद्रव्यत्वाच्चैतन्यस्य न तत् संयोग; नापि समवायः अनवस्थापातात्; तथा हि—समवायो हि समवायिनः सम्बद्धोऽसम्बद्धो वा; न तावत् असम्बद्धः, घटादिवदकिञ्चित्करत्वात्; सम्बद्धश्चेत्, संयोगादेरभावेन समवायान्तरमुपगन्तव्यम्; एवमपरापिचयाऽनवस्थापात इति यत्किञ्चिदेतत्। तस्माद्भिन्नत्वपक्षे धर्म्मधर्म्मिभावः सर्वथा नोपपद्यते। अभेदपक्षे तु बोधस्यात्मरूपत्वमेवेति सुतरां धर्म्मधर्म्मिभावो नास्ति, न हि तस्य तदेव धर्मो भवति; न हि शुक्लः शुक्लस्य धर्मो दृष्टः, तस्माद्भिन्नाभिन्नपक्षोऽवशिष्यते। न ह्येकमेकदा एकस्माद्भिन्नमभिन्नं च भवितुमर्हति, विरोधात्। अत्रोच्यते—प्रत्यक्षसिद्धत्वात् भेदाभेदावविरुद्धौ, यथा "गौरयम्" इति पिण्डात् अव्यतिरेकेण गोत्वं प्रतीयते, तदेव पिण्डान्तरे प्रत्यभिज्ञायमानत्वाद्भेदेनावगम्यते, अतः प्रत्यक्षेणैव भेदाभेदयोः प्रतीयमानत्वाद् अविवाद इति। नैतत् साधु मन्यामहे; प्रत्यक्षस्यान्यथा सिद्धत्वात्; भिन्नमपि हि वस्तु प्रत्यक्षेणात्यन्तसन्निधानादिदोषादभिन्नवत् प्रतीयते। यथा दीपज्वाला भिन्नाऽपि कुतश्चित् कारणात् अभिन्नवत् प्रतिभासते, यथा वा एकस्माच्चन्द्रात् द्वितीयश्चन्द्र इति, अतः प्रत्यक्षस्याऽन्यथासिद्धत्वात् न तेन प्रमाणसिद्धस्य भेदाभेदविरोधस्य प्रतिक्षेपो युक्तः। अथैवमुच्यते,—चैतन्यस्य द्वे रूपे स्तः; आत्मस्वरूपता, चैतन्यस्वरूपता चेति। तत्र आत्मस्वरूपतयाऽऽत्मनो न भिद्यते, चैतन्यस्वरूपतया भिद्यते च, अतो रूपाभ्यां भिन्नाभिन्नत्वमविरुद्धमिति; तदपि न, धर्म्मधर्म्मित्वाभावात्। तथा हि—येन रूपेण तदभिन्नं, न तेन रूपेण धर्म्मत्वमभिन्नमेवेत्यवोचं, येन रूपेण स्वरूपेण भिन्नं न

तेनाऽपि धर्म्मत्वं भिन्नत्वाद्घटादिवदित्युक्तम्। यच्चोक्तं रूपारूपाभ्यां भिन्नाभिन्नत्वमिति तदपि विचारं न सहते, ते रूपे किं चैतन्याद्भिन्ने अभिन्ने वा भिन्नाभिन्ने वा ? न तावत् भिन्ने, भिन्नत्वे घटादिवदकिञ्चित्करत्वात्; अभिन्नत्वे चैतन्यमात्रमेवेति न ताभ्यां भिन्नाभिन्नत्वम्; भिन्नाभिन्नत्वञ्च विरोधादयुक्तं, तयोरपि भिन्नाभिन्नत्वाभ्यां भिन्नाभिन्नत्वाभ्युपगमेऽनवस्थापात इत्यलमतिविस्तरेण। तस्मान्नात्मा सर्वथा चिद्धर्मा। किं तर्हि ? चित्स्वरूप एवेति। एतेन सदानन्दयोरप्यात्मस्वरूपत्वं व्याख्यातम्; नित्यश्चात्मा सन् अकारणवत्त्वात् परमात्मवत्, स आत्मा अहमपीति प्रतीयते, अकारणवांश्च; न ह्यस्य दृश्यकारणं प्रत्यक्षादिभिरुपलभ्यते, नापि श्रूयते; त्रैलोक्यकारणता हि आत्मनः श्रूयते, "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" [तैत्ति० उप० २ वल्ली १ अनु०] इत्यादिश्रुतिभ्यः, न ह्यात्मनोऽपि कारणान्तरम्; अतः कारणात् नित्य आत्मेति सिद्धम्। तस्मात् साधूक्तं "नित्यबोधस्वरूपम्" इति। तत्रैव दृष्टान्तमाह, यमग्न्युष्णवदिति।—यथा उष्णत्वमग्नितो न व्यवच्छिद्यते, व्यतिरेके हि कदाचिदन्यत्राप्युपलभ्येत यथा पुरुषाद्दण्डः, न चैवमस्ति; तस्मादग्निस्वरूपमेवोष्णत्वम्; एवमात्मनोऽपि चैतन्यस्वरूपत्वमित्यर्थः। तथा चोक्तं,—"निरंशत्वाद्विभुत्वाच्च तथाऽनश्वरभावतः। ब्रह्मव्योम्नोर्न भेदोऽस्ति चैतन्यं ब्रह्मणोऽधिकम्॥" इति।

ननु मनश्चक्षुरादीनां प्रवृत्तौ किमर्थमधिष्ठानमिष्यते, स्वयमेव कस्मान्न प्रवर्त्तते ? इत्यत आह, अबोधात्मकानीति।—हेतुगर्भितं विशेषणं, ततश्चायमर्थो भवति,—अबोधात्मकत्वादचैतन्यत्वात् घटादिवत् चेतनमधिष्ठातारमाश्रित्य प्रवर्त्तन्ते इति; अचेतनत्वञ्चैषां ज्ञेयत्वात् घटादिवत्, श्रुतिरपि "नान्यो-

प्रवर्त्तन्त आश्रित्य निष्कम्पमेकं
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ २ ॥
मुखाभासको दर्पणे दृश्यमानो
मुखत्वात् पृथक्त्वेन नैवाऽस्ति वस्तु।

ऽतोऽस्ति द्रष्टा" [ बृह० उप० ३ अध्या० ७ ब्रा० २३ मन्त्रः ] इत्याद्या आत्मव्यतिरिक्तस्य चैतन्यं प्रतिषेधति ; अतो युक्तमुक्तं चैतन्यमात्मानमाश्रित्य प्रवर्त्तन्त इति। निष्कम्पं निस्तरङ्गं निःसंशयमित्यर्थः, तथाच श्रुतिः,—"भिद्यते हृदयग्रन्थिः" [ मुण्ड० २ मुण्ड० २ खण्ड० ८ मन्त्रः ] इत्याद्या। एकञ्चाद्वितीयं एकं सत्त्वं देवतिर्य्यङ्मनुष्यादिशरीरेष्वेकं, न तु साङ्ख्यादिपरिकल्पितवन्नानाभूतमित्यर्थः ॥ २ ॥

ननु आत्मन एकत्वे सुखदुःखादिव्यवस्था न स्यात्, तथाहि यदि सर्वशरीरेष्वेक एवात्मा भवेत्, तदा एकस्मिन् सुखिनि सर्व एव सुखिनः स्युः, एकस्मिन् दुःखिनि सर्व एव दुःखिनः स्युः, एकस्मिन् जानति सर्व एव जानीयुः, तथैकस्मिन् जायमाने म्रियमाणे वा सर्व एव जायेरन्, सर्व एव म्रियेरन्, तथैकस्मिन् बद्धे मुक्ते वा सर्व एव बध्येरन्, सर्व एव मुच्येरन् इति, न चैवमस्ति, तस्मान्नैकत्वमात्मनो भवितुमर्हति ; अत आह, मुखेत्यादि।—मुखाभासको मुखप्रतिविम्बो दर्पणे दर्पणजातौ नानाप्रकारेषु जलतैलकाचप्रभृतिष्वितियावत्, दृश्यमानो मुखत्वात् परमार्थसतो मुखरूपात् पृथक्त्वेन भेदेन नैवाऽस्ति वस्तु, यद्यपि मुखाभासको नाम वस्तु नास्त्येव, तथाप्युपाधिभेदात् परमार्थसतो मुखात् परस्परञ्च मुखाभासका भिन्नाः प्रतीयन्ते, अथच उपाधिगतमलिनत्वादितद्धर्मैर्मलिन-

चिदाभासको धीषु जीवोऽपि तद्वत्
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ३ ॥

त्वादिधर्मका: प्रतीयन्ते ; तद्वत् परमार्थसम्मुखाभासकवत् चिदाभासक आत्मप्रतिबिम्ब: धीषु बुद्धिषु दृश्यमानो जीव इत्युच्यते य:, सोऽहमात्मेति। जीवास्तु उपाधिगतभेदभिन्ना: प्रतिभासन्ते, उपाधिगतसुखदु:खादिमन्त: प्रतीयन्ते ; उपाधयश्च व्यवस्थितरूपा एवेति सुखदु:खादीनामेकात्मपक्षे व्यवस्था युक्ता इति नानयात्मभेद: शक्यो व्यवस्थापयितुम्। श्रुतिश्चैकात्म्यमेव प्रतिपादयति, "एकमेवाद्वितीयं ब्रह्म" [ छान्दो० उप० ६ अध्या० २ खण्ड० १ मन्त्र: ] इति सजातीयविजातीयस्वगतभेदं निराकरोति ; आत्मभेदपक्षे त्वियं सुखदु:खादिव्यवस्था नोपपद्यते ; तथाच प्रतिशरीरमात्मानो भिन्ना:, ते च सर्वे प्रत्येकं सर्वगता इति आत्मभेदवादिनो मन्यन्ते। तत्र सर्वेषां सर्वगतत्वात् सर्वसन्निधौ सुखादिकं उत्पद्यमानं विशेषहेतोरभावात् कथमेकस्य तत् सुखादिकं न सर्वेषामित्यवधार्य्यते ? अथ यत् सम्बन्धिना कार्य्यकारणसङ्घातेन सुखादिकं जन्यते, तस्यैव तदभिधीयते, तस्य तत्कार्य्यकारणसङ्घातस्यापि सर्व्वसन्निधावुत्पद्यमानस्य विशेषहेतोरभावादेव कथमेकात्मसम्बन्धित्वम् ? इति। अथ यत्कर्म्मवशात् कार्य्यकारणसङ्घातादुत्पत्तिस्तस्यैवासौ कार्य्यकारणसङ्घातो विशेषहेतुरिति चेन्न, कर्म्मणोऽपि सर्वात्मसन्निधावुत्पद्यमानस्य सर्वात्मसम्बन्धित्वेन तज्जनितकार्य्यकारणसङ्घातस्यापि सर्वात्मसम्बन्धात् तज्जनितसुखदु:खादे: सर्वात्मसम्बन्धित्वमिति सुखादिकस्य नानात्वपक्षे एवानवस्थेति पूर्व्वपूर्व्वकार्य्यकारणसङ्घातस्यापि कर्मापेक्षायामनवस्थादोष:। अनादित्वे नानवस्थादोष:, परिहारश्चान्ध-

यथा दर्पणाभाव आभासहानौ
मुखं विद्यते कल्पनाहीनमेकम् ।
तथा धीवियोगे निराभासको यः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ४ ॥

परम्परयेति । श्रुतिरपि आत्मनानात्वं प्रतिषेधति, "एकमेवा-द्वितीयं ब्रह्म," [छान्दो० उप० ६ अध्या० २ खण्ड० १ मन्त्रः ] "नेह नानास्ति किञ्चन" [वृह० उप० ४अध्या० ४ब्रा० १९मन्त्रः] इत्यादिका । अतः साधूक्तम् "एकम्" इति ॥ ३ ॥

ननु एवं सति आत्मनः सुखदुःखादिसम्बन्धाभावात् बन्धाभावः, बन्धाभावान्मोक्षाभावः, बद्धो हि मुच्यते नाबद्ध इति ; तथा चिदाभासकस्यापि बन्धमोक्षौ न विद्येते अवस्तुत्वात् तस्य बुद्धेरपि विनाशित्वात् बन्धमोक्षयोरभावः, ततश्च बन्ध-मोक्षशास्त्रमनर्थकमित्याह, यथेत्यादि ।—यथा येन प्रकारेण दर्पणस्याभावे सति आभासस्य मुखप्रतिविम्बस्य हानौ सत्यां मुखं परमार्थसत् कल्पनाहीनं मिथ्याज्ञानरहितं एकमेव परं विद्यते अस्ति, तथा तेनैव प्रकारेण धीवियोगे बुद्धेरभावे सति निराभासको निष्प्रतिविम्बः परमार्थसन्नेक एव यः सोऽहमात्मा । अयमभिप्रायः,—आत्मनोऽज्ञानादिकृतोऽयं बुद्ध्यादिप्रपञ्चः, तत्र बुद्ध्यादौ प्रतिविम्बरूपेण आत्मानमध्यस्य तद्गतसुखदुःखादिकमात्मन्यध्यस्यते इति सोऽयमध्यासो बन्धः आत्मज्ञाने भूतेऽज्ञाननिवृत्तौ बुद्ध्यादिप्रपञ्चनिवृत्तौ अध्यासनिवृत्तिर्मोक्षः, न पुनः परमार्थौ बन्धमोक्षौ विद्येते इति सर्वं समञ्जसम् ॥ ४ ॥

मनश्चक्षुरादेर्विमुक्तः स्वयं यो
मनश्चक्षुरादेर्मनश्चक्षुरादिः।
मनश्चक्षुरादेरगम्यस्वरूपः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ५ ॥
य एको विभाति स्वतः शुद्धचेताः
प्रकाशस्वरूपोऽपि नानेव धीषु।

केचिदिह खलु देहादीनामात्मत्वं मन्यन्ते, तान् प्रत्याह, मन इति।—मन आदेश्चक्षुरादेर्विमुक्तः पृथग्भूतो यः सोऽहमात्मेति सम्बन्धः। मनश्चक्षुराद्युपादानेन तद्युक्तत्वात् शरीरमपि उपात्तं द्रष्टव्यम्; एतेन शरीरादपि विमुक्त इति गम्यते। तथाच गुरुः,—"बुद्धीन्द्रियशरीरेभ्यो भिन्न आत्मा विभुर्ध्रुवम्। नानारूपः प्रतिचेत्ते आत्मवृत्तिषु भासते॥" इति। कथं मनश्चक्षुरादेर्विमुक्त आत्मा, अत आह, स्वयमिति।—स्वयं य आत्मा प्रकाशते मनश्चक्षुरादिकस्य प्रकाशस्य मनश्चक्षुरादिरिव मनश्चक्षुरादिः प्रकाशगुणयोगात् अयमात्मा यथा वाह्यघटपटादेः प्रकाशको मनश्चक्षुरादिस्ततोऽतिरिच्यते, तथाऽन्तरस्यापि मनश्चक्षुरादेः प्रकाशक आत्मा ततोऽतिरिक्त इति निश्चीयते; अत एव मनश्चक्षुरादीनां अनात्मत्वं सिद्धं ज्ञेयादन्यो ज्ञाता स्यात्। ननु आत्मनोऽपि ज्ञेयत्वादनात्मत्वं प्रसज्येत, इत्यत आह, मन इति।—मनश्चक्षुरादेरगम्यस्वरूपोऽप्रकाश्यस्वरूपः; तथा च श्रुतिः,—"यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" [ तैत्ति० उप० २ वल्ली० ४।९ अनु० ] इत्यादिका ॥ ५ ॥

ननु यद्ययमात्मा मनश्चक्षुरादेरगम्यस्वरूपः तदा कथमस्य

शरावोदकस्थो यथा भानुरेकः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ६ ॥

सिद्धिः ? घटपटादयो हि मनश्चक्षुराद्यधीनसिद्धयो दृष्टाः, अत आत्माऽपि तदधीनसिद्धियुक्तः ; अथ तदधीनसिद्धिर्यदि न स्यात् तदा सिद्धिरेव न स्याच्छशविषाणवत् इत्यत आह, य इत्यादि। —य इति स्वतः सिद्धतामाह। यो ह्येकोऽद्वितीयो विभाति प्रकाशते, स्वतः स्वयमेव, न परतः, शुद्धं निर्म्मलं चेतो यस्य सः, तथा शुद्धे चेतसि स्वयमेवात्मा प्रकाशते स्फुरतीत्यर्थः, अत एव सत्त्वशुद्ध्यर्थं वेदेऽपि वेदानुवचनादयो विहिताः, "तमेतं वेदानुवचनेन" [ बृह० उप० ४ अध्या० ४ ब्रा० २२ मन्त्रः ] इत्यादयः। घटपटादयश्च जड़त्वात् प्रकाशान्तरापेक्षत्वाच्च अप्रकाशा इति, युक्तम् ; आत्मा तु प्रकाशस्वरूपत्वात् प्रकाशान्तरानपेक्ष्यः प्रकाशते सवितृप्रकाशवत्। यथा सविता स्वप्रकाशे प्रकाशान्तरं नापेक्षते, तथा च प्रकाशते तद्वदात्माऽपीति भावः। एवमुत्पन्नात्मज्ञानोऽद्वितीयो जीवन्मुक्तः प्रकाशस्वरूपोऽपि परमार्थतो नानाधीषु नानेव भाति यः सोऽहमात्मेति सम्बन्धः। शरावोदकेषु अवस्थितो यथा भानुरादित्यः प्रकाशस्वरूपोऽप्येकः सन्ननेकवद्भाति, तद्वदात्माऽपीति भावः। ननु कोऽयं जीवन्मुक्तः ? देहवांश्च जीवन्मुच्यते, तस्य जीवतो यदि देहाभावो मुक्तिरभिप्रेयते नासावुत्पद्यते विरोधात् ; न हि देहवतो देहाभावः सम्भवति। अथ सत्यपि देहे भोगविरहो मुक्तिरिति तदपि न चतुरस्रं, सर्व्वभोगकरणेन्द्रियसम्पत्तौ भोगविच्छेदस्यासम्भावनीयत्वात्। अथ मिथ्याज्ञाननिबन्धनो हि भोगः, तस्य सम्यक् ज्ञानेन निवर्त्तितत्वात् भोगविच्छेद इति चेन्न, बाधितस्यापि मिथ्याज्ञानस्य द्विचन्द्रादि-

ज्ञानवत् अनुत्पत्त्यभ्युपगमात्, अन्यथा देहवानेव न स्यात् ; अत-एव विदुषां जनकादीनां राज्यं श्रूयते, श्रुतिरपि देहवतो भोग-विच्छेदं वारयति—"न वै सशरीरस्य सतः प्रियाप्रिययोरप-हतिरस्ति, अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" [ छान्दो० उप० ८ अध्या० १२ खण्ड० १ मन्त्रः ] इति । तस्मादयुक्ता जीवन्मुक्तिरिति । अत्रोच्यते,—जीवतश्च तावत् तत्त्वज्ञानमुत्पद्यते, न मृतस्य ; शमदमादेः श्रवणमननादेश्च ज्ञानहेतोर्मृतस्यासम्भवात्; अत एव विदुषो याज्ञवल्क्यस्य सन्न्यासः श्रूयते । न च मृतस्य सन्न्यासः श्रूयते सम्भवति वा, तस्माज्जीवतस्तत्त्वज्ञानमुत्पद्यत इति सिद्धं, तत्त्वज्ञानादेव च मुक्तिः सिद्धा । "स यो ह वै तत् परमम्" [ मुण्ड० उप० ३ मुण्ड० २ खण्ड० ९ मन्त्रः ] इत्यादिश्रुतिभ्यः । न च ज्ञानस्य मोक्षफलत्वे श्रुतिषु सहकार्य्यन्तरं श्रूयते, ज्ञानमात्रश्रवणात् ; "भिद्यते हृदयग्रन्थिः" [ मुण्ड० उप० २ मुण्ड० २ खण्ड० ८ मन्त्रः ] इत्यादि, सहकार्य्यन्तरप्रतिषेधश्च श्रूयते, "तमेव विदित्वाति-मृत्युमेति" [ श्वेता० उप० ३ अध्या० ८ मन्त्रः ] इति । ननु श्रुतिरेव ज्ञानसहकारिणो मरणात् मुक्तिं दर्शयति,—"तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" [ छान्दो० ६ अध्या० १४ खण्ड० २ मन्त्रः ] इति । पूर्व्वोत्पन्नस्य ज्ञानस्य चिरप्रवृत्तत्वात् मरणकाले सन्निपतितुमशक्तेस्तत्काल एव उत्पन्नज्ञानात् मुक्तिरिति चेन्न, "एतदेवं यज्ञेदेव तदेव ब्रूहि" इति, "आचार्य्यवान् पुरुषो वेद" [ छान्दो० उप० ६ अध्या० १४ खण्ड० २ मन्त्रः ] इति च श्रूयते । प्रथमं यत् ज्ञानं तत एव मुक्तिरिति । अत एतेन वचनान्तरमनु-गृहीतं भवति "जीवन्नेव हि विद्वान् हर्षामर्षाभ्यां विमुच्यते" न चेह "न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति"

[छान्दो० उप० ८ अध्या० १२ खण्ड० १ मन्त्रः] इति श्रुत्यन्तरविरोधः श्रूयते, सामान्यविषयत्वात्; अत एव विद्वानिति विशेषनिर्देशः। "तस्य तावदेव चिरम्" [छान्दो० उप० ६ अध्या० १४ खण्ड० २ मन्त्रः] इति श्रुतिस्त्यक्ता स्यादिति चेन्न, व्यवस्थयोपपत्तेः; तथा हि—मुक्तिः खलु स्वाभाविकी सर्व्वेषां न ज्ञानेन जन्यते। किं तर्हि? अविद्यातिमिरतिरोहितायां तमोमात्रं निराक्रियते, तच्च प्रथमसज्ञानेनैव कृतं तथाप्यविद्याकार्य्यदेहादिवशात् पुनर्मोहान्धकारोऽसाधारणं कृतमपि तिरस्क्रियत इति तस्य तिरस्कारभावस्य देहादेर्विच्छेदात् विच्छेदो भवति। एवं सति प्राचीनमेव मोहान्धकारोऽसाधारणं ज्ञानमात्रनिबन्धनमवतिष्ठते, यथा सूर्य्योदयेन महातिमिरेऽसाधारणे कृते पुनश्छत्रादिकृतस्य तिमिराभासस्य छत्रादिविगमे विगमः; ततः प्राचीनमेव महातिमिरोऽसाधारणं सूर्य्योदयमात्रनिबन्धनमवतिष्ठते, तस्मान्न ज्ञानान्तरादेव मुक्तिरिति सिद्धम्; न च श्रुतिसिद्धमनेन निराक्रियते।

ननु च पारमार्थिकमद्वैतं, मिथ्याज्ञानविजृम्भितः प्रपञ्च इति श्रुत्यर्थोऽवधारितः; तत् कथं सत्यपि बाधके प्रपञ्चानुवृत्तिः? न हि सत्येव शुक्तिज्ञाने रजतप्रपञ्चोऽनुवर्त्तते; अत्रोच्यते,— "नेति नेति" [वृह० उप० २ अध्या० ३ ब्रा० ६ मन्त्रः] "न ह्येतस्मादिति नित्यादन्यत् परमस्ति" "नेह नानास्ति किञ्चन" [वृह० उप० ४ अध्या० ४ ब्रा० १९ मन्त्रः] इत्यादिवाक्यात् प्रपञ्चप्रत्ययप्रविलयद्वारेण असन्दिग्धमवधारितज्ञानं तावत् उत्पद्यते। न च तत् प्रपञ्चप्रत्ययेन बाध्यत इति युक्तं, तत्प्रलयेनैवोत्पत्तेः। यत् पुनरुक्तं, कथं प्रपञ्चप्रत्ययानुवृत्तिरिति; तत्रोच्यते,—तत् द्विविधं बाधकं भवति, यथा सत्येव मिथ्याज्ञानहेतुभूते पीतादौ, जाते एव पीतशङ्खज्ञाने निमित्तान्तरान्नायं

पीत इति मिथ्याज्ञानकारणापगम एव; यथा मन्दालोकप्रभवस्य शुक्तिकारजतज्ञानस्य महत्यालोके नेदं रजतमिति ज्ञानं, तद्वदिहापि पीतशङ्खज्ञानबाधकवत् सत्येव मिथ्याज्ञानहेतुभूते शरीरप्रपञ्चस्य बाधकमद्वैतज्ञानमुत्पद्यते; अतः स्वकारणात् बाधितमपि प्रपञ्चज्ञानं पीतशङ्खज्ञानवत् पुनर्जायते। ननु देहस्यापि प्रपञ्चान्तर्भूतत्वात् झटित्येव प्रविलयः प्रसज्येत, न, प्रारब्धकर्म्मवशात् तदनुवृत्तेः; कर्म्मणः कुलालचक्रभ्रमिवत् संस्कारानुवृत्तेरिति सिद्धा जीवन्मुक्तिरिति। कर्म्मसंस्कारक्षयात्तु देहपाते सति सर्व्वथैव प्रपञ्चविलयः कर्मान्तराणाञ्च ज्ञानेन क्षयितत्वात् देहान्तरानुत्पत्तिः परममुक्तिरिति। एवञ्च सति ज्ञानमात्रान्मुक्तिरिति प्रतिपादनादेव कर्म्मणो मुक्तिहेतुत्वमपास्तमिति वेदितव्यम्। तथा हि न तावत् केवलात् कर्म्मणो मुक्तिः, अश्रवणात्; नापि तत एव ज्ञानसहिताच्च, अश्रुतेरेव। ननु "तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च" [ वृह० उप० ४ अध्या० ४ ब्रा० २ मन्त्रः ] इति विद्याकर्मणोः सहभावः श्रूयते; सत्यं, संसारविषयन्तु सहभावश्रवणं, न मुक्तिविषयम्। ननु "यावज्जीवमग्निहोत्रं जुहोति" [ मीमांसा दर्श० २अध्या० ४ पाद० १ मन्त्रस्य शावरभाष्ये वह्वृच् ब्राह्मणस्योल्लेखः ] इति चोदनाप्राप्तानां नित्यनैमित्तिककर्मणां ज्ञानस्य च अर्थात् समुच्चय इति चेन्न, विनियोजकप्रमाणाभावात्। "तमेतं वेदानुवचनेन ब्राह्मणाः" [ वृह० उप० ४ अध्या० ४ ब्रा० २२ मन्त्रः ] इत्यादिश्रुतिर्विनियोजिका अस्त्येवेति चेन्न, विविदिषासम्बन्धात् कर्मणां ज्ञानार्थत्वप्रतीतेर्मोक्षार्थत्वं नावगम्यत इति। किञ्च, न हि ज्ञानमज्ञाननिवृत्तौ उपकारकमपेक्षते, उत्पन्नादेव तस्मादज्ञाननिवृत्तेरवश्यम्भावात्। तथा च श्रुतिः,—"तमेव विदित्वाऽतिमृत्युम्" [ श्वेता० उप०

यथानेकचक्षुःप्रकाशो रविर्न
क्रमेण प्रकाशीकरोति प्रकाश्यम् ।
अनेका धियो यस्तथैकप्रबोधः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ७ ॥

---

२ अध्या० ८ मन्त्रः ] इत्यादिका। अपि च यदि कर्मफलं मोक्षो भवेत्, तर्हि अनित्यत्वं प्रसज्येत घटादिवत् स्वर्गादिवच्चेति, अमुमप्यर्थं श्रुतिरप्याह,—"तद्यथेह कर्मजितो लोकः क्षीयते" [ छान्दो० उप० ८ अध्या० १ खण्ड० ६ मन्त्रः ] इत्याद्या "अग्निहोत्रादिवत् कार्य्यार्थमेव" इति सूत्रकारेण परम्परया कर्मणां मुक्तिफलं विहितं प्रयाजादिवत्, अतो ज्ञानार्थत्वेन कर्मणामुपयोगोऽस्त्येव ; ज्ञानोत्पत्तेस्तु पुरस्तात् कर्मणामुपयोगाभावेऽपि लोकसङ्ग्रहार्थमनुष्ठानं कर्त्तव्यमेवेति सर्वं समञ्जसम् ॥ ६ ॥

ननु कथमेक एवात्मा अनेकां बुद्धिं युगपदधितिष्ठति ? न ह्येक एवाश्ववाहको युगपदनेकानश्वानधितिष्ठति इत्युपलभ्यते, क्रमेणाधिष्ठानन्तु युज्यते, तच्चेह नास्ति, युगपदेव सर्वासां बुद्धीनां स्वव्यापारे प्रवृत्तिदर्शनात् ; अनधिष्ठितानाञ्च प्रवृत्त्यभावात् अतो नैक आत्मा इत्याह, यथेत्यादि।—यथा येन प्रकारेण प्रकाश्यत्वप्रकारेण रविरादित्यः एकः एवानेकेषां चक्षुषां प्रकाशो युगपदनेकानि चक्षूंषि अधितिष्ठति, न क्रमेण एकैकस्मै चक्षुषे प्रकाश्यं प्रकाशीकरोति, तथा तेनैव प्रकारेण एकश्चासौ प्रबोधश्चेति एक एव प्रबोधोऽधिष्ठाताऽनेका धियो बुद्धीर्युगपदधितिष्ठति,न क्रमेण एकैकस्यै धिये प्रकाश्यं प्रकाशीकरोति यः, सोऽहमात्मेति सम्बन्धः ॥ ७ ॥

विवस्वत्प्रभातं यथा रूपमक्षं
प्रगृह्णाति नाभातमेवं विवस्वान् ।
तथाभात आभासयत्यक्षमेकः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ८ ॥
यथा सूर्य्य एकोऽप्स्वनेकश्चलासु
स्थिरास्वप्यनन्यग्विभाव्यस्वरूपः ।

---

ननु अस्तु तर्हि विवेकः बुद्धीनाम् अधिष्ठाता किमात्माभ्युपगमेन ? तथाच श्रुतिः,--"धियो यो नः प्रचोदयात्" [ शुक्ल-यजुः माध्य० शा० ३६ अध्या० ६ क० ३ मन्त्रः ] इत्यत आह, विवस्वदिति ।—विवस्वता आदित्येन प्रभातं प्रकाशितमित्यर्थः, अक्षं चक्षुर्यथा रूपं घटादि प्रगृह्णाति प्रकर्षेण जानाति नाभातं न अप्रकाशितम् अन्धकारे घटाद्यनुपलम्भात्, अत्र विवस्वानपि एकस्तथा तेनैव प्रकारेण भातः प्रकाशितः सन्नाभासयति अधितिष्ठति अक्षं चक्षुः, यश्च विवस्वतोऽधिष्ठाता सोऽहमात्मा, स च सर्वासां बुद्धीनाम् अधिष्ठाता श्रुत्या च चक्षुरधिष्ठातारमभिप्रेत्य विवस्वतो बुद्धिप्रेरकत्वमभिहितं "यस्माद्विवस्वदधिष्ठितं चक्षुर्बुद्धिमुत्पादयति" ॥ ८ ॥

ननु आत्मापि तर्हि प्रकाशान्तरेणाधिष्ठातव्यः, न तस्य स्वप्रकाशता, न "नान्योऽतोऽस्ति द्रष्टा" [बृह० उप० ३ अध्या० ७ ब्रा० २३ मन्त्रः ] इति श्रुत्या तत्र द्रष्ट्रन्तरप्रतिषेधादिति--तदाह, यथेत्यादि ।—यथा येन प्रकारेण सूर्य्यः, एकोऽपि अप्सु वारिषु चलासु अनेकोऽपि नानाऽपि अनन्यग् विभाव्यस्वरूपः, अनु अञ्चति गच्छति अन्वक् न अन्वक् पृथगिति

चलासु प्रभिन्नासु धीष्वेक एवं
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ९ ॥
घनच्छन्नदृष्टिर्घनच्छन्नमर्कं
यथा निष्प्रभं मन्यते चाऽतिमूढः।
तथा बद्धवद्भाति यो मूढदृष्टेः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ १० ॥

---

यावत्, स्थिरासु च एकः सन् प्रतिभासते, यद्वा,—अन्वक्त्वेन विभाव्यं स्वरूपं यस्य स तथोक्तः, एवं बहुव्रीहिसमासं कृत्वा पश्चान्नञ्समासः, ततश्चायमर्थो भवति,—न वारिषु रविरनुगतो-भवति ; किं तर्हि ? देदीप्यमानो भ्रान्त्या तु वारिषु दृश्यत इव ; एवमेक आत्मा चलासु प्रभिन्नासु नानाभूतासु धीषु बुद्धिषु अनेकः सन् अनन्वग्विभाव्यस्वरूपो न बुद्धीरनुगच्छति, किन्तु पृथगेव देदीप्यमानो यः, सोऽहमात्मेत्यर्थः ॥ ९ ॥

घनेत्यादि।—घनेन मेघेन छन्ना तिरोहिता दृष्टिर्दर्शनं यस्य स घनच्छन्नदृष्टिः पुरुषः घनेन छन्नमादित्यं यथा येन घनच्छन्नत्वप्रकारेण मन्यते जानाति, निष्प्रभं प्रभारहितम् अप्रकाशस्वरूपमिति यावत्, सूर्य्यं हि मन्यते, घनच्छन्नदृष्टित्वात् प्रकाशस्वरूपमपि रविमप्रकाशमहं पश्यामीत्याह, अतिमूढः अतिमूर्खं इति अतिमूढत्वादात्मनो दृष्टिविघातमगणयन् सूर्य्य-मेव अप्रकाशं मन्यते। पादपूरणे च शब्दः। तथा तेनैव प्रकारेण अविद्याच्छन्नदृष्टिः पुरुषो बुद्धिमात्मत्वेन गृहीत्वा तद्गतसुखादिकमात्मनि मन्यमानो मूढदृष्टेः, पुरुषस्य सकाशे इति शेषः, बद्ध इव भाति यो सोऽहमात्मेति सम्बन्धः ॥ १० ॥

समस्तेषु वस्तुष्वनुस्यूतमेकं
समस्तानि वस्तूनि यन्न स्पृशन्ति।
वियद्वत् सदा शुद्धमच्छस्वरूपं
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ११ ॥
उपाधौ यथा भेदता सन्मणीनां
तथा भेदता बुद्धिभेदेषु तेषु।
यथा चन्द्रकाणां जले चञ्चलत्वं
तथा चञ्चलत्वं तवापीह विष्णो! ॥ १२ ॥

---

समस्तेष्वित्यादि।—समस्तेषु निःशेषेषु वस्तुषु प्रपञ्चात्मकेषु सदाऽनुस्यूतमनुगतं सर्वतो व्याप्तमेकं न नाना समस्तानि वस्तूनि प्रपञ्चात्मकानि सद्रूपं न स्पृशन्ति कुतो वियद्वत् आकाशमिव सदा शुद्धं निर्म्मलं रागादिदोषरहितम् अच्छस्वरूपम् अमूर्त्तस्वरूपमिति यावत्, एवमेकं परं ब्रह्म यत्, सोऽहमात्मेति ॥ ११ ॥

व्युत्पादितमुपसंहरति, उपाधावित्यादि।—उपाधौ उपाधिभेदसम्बन्धे सति यथा सन्मणीनां विशुद्धमणीनां स्फटिकादीनां लोहितकृष्णादिभेदेन भेदता भेदः [ भेद एव इति भेदता स्वार्थे तन् ] तथा बुद्धिभेदेषु नानाबुद्धिषु तेऽपि तवापि नानात्वम्। हे विष्णो! परमार्थतस्तु स भेदो नास्त्येव, बुद्ध्युपाधिकृतभेदस्तु विस्तृत एवेत्यर्थः; यथा चन्द्रकाणां [ चन्द्रा एव चन्द्रकाः स्वार्थे कः ] जलेषु प्रतिबिम्बरूपेषु अलं दृश्यमानं जलस्य

चञ्चलत्वात् चञ्चलत्वं, तथा बुद्धीनां तत्रापि चञ्चलत्वमौपाधिकं, न पारमार्थिकम् इह बुद्धिभेदेषु विष्णोर्व्यापनशीलस्य इत्यर्थः॥ १२॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्य श्रीमच्छङ्कर-भगवत्कृती हस्तामलकभाष्यं समाप्तम्।

---

